# LINGAVACANAVICARA

A Treatise on Gender and Number in Sanskrit

By

Mahavaiyakarana

**Pandita Dinabandhu Jha**, Vishistavidvan,

MITHILA SANSKRITA VIDYAPITHA

DARBHANGA



Edited By

Mm. Dr. UMESHA MISHRA

1361 Fasli

मिथिलासंस्कृतविद्यापीठग्रन्थमाला—पुष्पम्—४

# लिङ्गवचनविचारः



महावैयाकरण-
पण्डितश्रीदीनबन्धुझा-
विरचितः

मिथिलासंस्कृतविद्यापीठाध्यक्षेण
सम्पाद्य प्रकाशतां नीतः

# NOTE BY THE GENERAL EDITOR

The Mithila Sanskrit Research Institute has been established by the Government of Bihar and is located at Darbhanga on a plot of land donated by the Maharajadhiraja Shri Kameshwara Singh Bahadur of Darbhanga. The foundation stone of the Institute was laid down by the President of the Indian Union Dr. Rajendra Prasad on the 21st of November, 1951

This Institute has been founded with a view to promote advanced research in various aspects of Sanskrit learning and to impart teaching of the Post-Graduate standard to a limited number of students in the stimulating environments of a residential community It will serve as the meeting ground of the traditional Sanskrit scholars and modern researchers so that while the traditional scholars may get training in modern methods of research, the sources of ancient learning and its depth may easily be available to the modern scholars In so doing the Institute will aim at the preservation and rehabilitation of the traditional Indian scholarship in the field of modern learning and research.

The Institute mainly stands for higher researches based on authentic texts on modern scientific lines, so while individual researchers including the members of the staff may carry on research in particular subjects, the Institute as a whole will have some long-term as well as short-term programme of research and publication.

As a foundation for carrying on research in the future and as a means of preserving useful source of materials, the Institute will take up the collection and survey of manuscripts and other important source of material available in Mithila in particular, and also in other parts of Bihar and elsewhere.

The Institute will not only promote and encourage research by individual scholars and students, but it will also

undertake specific projects which will be in the nature of team work produced by all or selected members of the staff working in close co-operation and association with one another and seeking the guidance and assistance of the Board of Advisers From time to time, a programme or plan for the projects extending over a specified period will be drawn up and duties will be assigned to various members of the staff in connection with the fulfilment of that project. The following projects may, for example, be undertaken by the Institute from time to time

(i) Editing the Puranas and the Upanisads on scientific lines.

(ii) Collection, survey and cataloguing of manuscripts and other important source materials available in Mithila and in other parts of Bihar.

(iii) Editing a series of rare and important old and new Sanskrit Texts

(iv) Preparing a critical bibliography of research work done in Sanskrit topic-wise, up to the present day and preparing supplements subsequently

(v) Preparing a comprehensive History of Sanskrit literature in all its branches based on original sources.

(vi) Preparing a chronology of Sanskrit authors and their works

(vii) Preparing an annual hand-book of information on Indological studies

Other projects also may be undertaken in course of time.

The Institute will publish gradually monographs, texts, critical editions, catalogues bibliographies, critical works, research journals, etc. The publication will be confined principally to the work done at the Institute either through individual research of students, scholars and members of the staff or through the projects undertaken at the Institute.

With these aims and objects in view we have undertaken the publication of rare and important works of old and also of modern period in order to place before the scholarly world the past and present contributions of Sanskrit scholars to knowledge in a Sanskrit series under our 'short term project of research programme'.

# PREFACE

In pursuance of the declared objects of the *Mithila Research Institute*, Darbhanga we are presenting herewith the **Lingavacanavicara** to the world of scholars as the fourth volume of the *Mithila Research Institute Sanskrit Series*. The author, Pt. Dinabandhu Jha is one of the top-ranking grammarians of the present day Mithila. He is also our respected collegue in the Institute In the present treatise on the problem of gender and number in sanskrit the author has tried to remove some difficulties which haunt not only the beginners but the learned Pandits as well. A result of long practical experience, extending over more than half a century, this book will, we hope, remove a long felt want of the sanskritists.

But it is not for us to say how far our hope will be justified, for we are one with Kalidasa when he says—

'आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्' ।

Meantime, I must thank the Government of Bihar for enabling me to start the series within a couple of years from the inception of the Institute.

Thanks are due to the authorities of the Darbhanga Press Co. Ltd, but for whose kind and ungrudging assistance the volume could not have come out in such a form and in such a short time.

UMESHA MISHRA

Vaishakha Sankranti
1361 Fasli

# प्रधानसम्पादकीयामुखम्

जनकयाज्ञवल्क्यादिपवित्रीकृते मिथिलामण्डले दरभङ्गानगरे महाराजाधिराजेन श्रीमता कामेश्वरसिंहबहादुरेण दानरूपेण प्रदत्ते बृहद्भूभागे एकपञ्चाशदुत्तरैकोनविंशतितमे ख्रीस्ताब्दीयवत्सरमासस्यैकविंशतितमे दिवसे भारतवर्षाधिष्ठात्रा श्रीमद्राजेन्द्रप्रसादमहोदयेन मिथिलासंस्कृतविद्यापीठोऽयं संस्थापितः ।

आवासिकेऽस्मिन् विद्यापीठे संस्कृतविद्याया विभिन्नशाखासु गम्भीरगवेषणात्मकाध्ययनं तदनुसारेणैव स्वल्पसंख्यकेभ्यो विद्यार्थिभ्यः स्नातकोत्तरशिक्षाप्रदानञ्च लक्ष्यम् । सम्मेलनस्थानमेतद्भारतीयप्राचीनशिक्षापद्धतिजुषां पण्डितानामाधुनिकगवेषणापराणां विदुषाञ्च । सम्भाव्यते चात्र परस्परपूरकत्वं सारस्वतवर्गद्वयस्य । अनेन प्रकारेण विद्यापीठेऽत्र प्राचीनविद्याध्ययनपद्धतिः अर्वाचीनविद्याक्षेत्रेषु प्रतिष्ठिता भविष्यति ।

आधुनिकवैज्ञानिकपद्धत्यनुक्रमेण प्राचीनशास्त्रग्रन्थानधिकृत्य प्रोन्नतमानुसन्धानं हि मुख्यं कर्तव्यत्वेन परिगृहीतमत्र । अध्यापका गवेषकाश्च विभिन्नविषयेषु गवेषणायां संलग्नाः सन्ति । पीठस्य स्वतन्त्रतया स्वल्पदीर्घकालसाध्या च गवेषणासरणिस्तदनुपुस्तकप्रकाशनञ्चेत्युभयं प्रवर्तितम् । मिथिलाप्रान्ते तथाऽन्यत्र च यानि खलु प्रतानि हस्तलिखितानि पुस्तकानि समुपलभ्यन्ते तेषां संग्रहोऽपि विद्यापीठस्यान्यतम उद्देश्यः । एतेष्वेव ग्रन्थरत्नेषु भारतीयकलाविज्ञानपरम्परा निहितास्ति । यत्र पुनस्तादृशः संग्रहो न शक्यकरणीयस्तत्र केवलं विशेषविवरणसंग्रहोऽपि सम्पादनीय एव ।

अत्र विद्यापीठे न केवलं वैयक्तिकी गवेषणा प्रचरति अपि तु शिक्षकाः विद्यार्थिनश्च परस्परं मिलित्वा सामूहिकरूपेण गवेषणाकार्यं परिचालनापरिषदो निर्देशानुसारेण प्रकुर्वन्ति ।

काले काले निर्दिष्टकालसाध्या ये विषयाः स्वीकर्तव्यास्तेषु कियन्तोऽधस्तादुल्लिख्यन्ते—

(१) वैज्ञानिकरीत्या पुराणानामुपनिषदां च सम्पादनम् ।

(२) प्राचीनहस्तलिखितानां ग्रन्थानां तथ्यपूर्णानां संग्रहः परीक्षणं विवरणनिर्माणं च ।

(३) बहुमूल्यानां संस्कृतग्रन्थानां प्राचीनानामाधुनिकानां च सम्पादनम् ।

( ४ ) गवेषणनिबन्धानां विषयानुसारेण सामोत्तिकसूचीनिर्माणं तथा काले काले तत्परिपूर्त्तिविधानं च ।

( ५ ) मूलग्रन्थानां परीक्षणं विधाय सर्वशाखान्वितस्य संस्कृतसाहित्यस्य पूर्णाङ्गेतिहासनिर्माणम् ।

( ६ ) संस्कृतग्रन्थानां तत्कर्तॄणां च कालक्रमनिर्धारणम् ।

( ७ ) भारतीयविद्यानिबन्धानां वार्षिकविवरणग्रन्थप्रणयनम् ।

इत्येवं व्यवस्थिते मिथिलासंस्कृतविद्यापीठस्थेन विशिष्टविदुषा श्रीदीनबन्धुशर्म्मणा गवेषणापूर्वकं निर्मितोऽयं लिङ्गवचनविचारनाम्ना प्रसिद्धो ग्रन्थो विपश्चितां पुरतः संस्थाप्यते । सुविदितमस्ति संस्कृतज्ञानां यदनादिकालतो व्यापकरूपेण प्रचलितेऽयं संस्कृतभाषा अद्यापि तथैवोल्लसन्ती शिष्टपरिगृहीतैः नवीनैः शब्दैः प्रतिदिनं स्वकोषं पूरयन्ती दृश्यते यथा वैदिकसमये । शिष्टपरिगृहीतत्वमेवैतस्य बीजम् । बहुदेशव्यापित्वात् प्रतिदिनं वृद्धिंगतत्वाचास्यां भाषायां तत्तत्प्रान्तीयप्रयोगवैचित्र्यात् शब्दानां लिङ्गे वचने च महान् भेदो दृश्यते । बहुषु स्थलेषु सन्देहोऽपि भवत्येव । प्राचीनानामर्वाचीनानामपि विदुषां लिङ्गवचनविषये महान् विवादो दृश्यते । अत एवास्माकं विशिष्टविदुषा महावैयाकरणेन श्रीदीनबन्धुशर्म्मणा शास्त्रतर्कानुभवादिसम्मिलितोऽयं ग्रन्थो निर्मितः । सोऽयमद्य प्रकाश्यते । ग्रन्थस्योपादेयताविषये स्वयं वक्तुं सर्वथाऽसमर्थोऽयं जनः । विशिष्टाः विद्वांसः एवात्र प्रमाणम् । आशास्महे यदनेन विवेचनेन सर्वेषां संस्कृतभाषारसिकानां महान् लाभो भविष्यतीति ।

वैशाखकृष्णैकादशी
१३६१ फसली

श्रीउमेशमिश्रः
प्रधानसम्पादकः

# प्राक्कथनम्

इह खलु संस्कृतवाक्येषु लिङ्गसंख्याविषये वैचित्र्यसद्भावादनेकविधा उत्पद्यन्ते सन्देहाः। तत्र लिङ्गविषये तावत् नपुंसकव्यक्तौ 'अयं ब्राह्मण' इति वाक्यं प्रयोक्तव्यम्, 'इयं ब्राह्मणीति' वा। सन्देहबीजन्तु यथा पुंसि न लौकिकं स्त्रीत्वं, स्त्रियां च न लौकिकं पुंस्त्वं तथा न स्त्री न पुमान् इति विग्रहानुसारेण नपुंसके लौकिकपुंस्त्वस्त्रीत्वयोरुभयोरप्यभावः। ब्राह्मणादिशब्दाश्च लौकिकपुंस्त्वस्त्रीत्वयोरेव बोधका न तु लौकिकनपुंसकत्वस्य।

एवं व्याकरणे पुंस्त्वाद्युपादाय कार्याणि विधीयन्ते। तत्र पुंस्त्वादिकं यदि लौकिकं गृह्यते तदा घटानित्यादौ नत्वादिकं न स्यात्। यदि वा चेतनाचेतनसाधारणं शास्त्रीयमेव पुंस्त्वादि गृह्यते तर्हि ब्राह्मणीत्यतः पुरुषस्यापि बोधः स्यात्। तस्मात् व्याकरणशास्त्रे निमित्तभूतं पुंस्त्वादि लौकिकं वा शास्त्रीयं वा माहाभिन्नपरः सन्देहः।

तथा 'स्त्रीस्वामिकं धनमि'ति वाक्यं साधु 'स्त्री स्वामिनीकमि'ति वा उभयं वेत्यपि संशयः। एवमन्येऽपि। तथा संख्याविषयेऽपि। 'इयं रामस्य दारा' इति वाक्यं शुद्धं किं वा इमे 'रामस्य दाराः' इति।

तथा 'नारीणां स्तना'विति वाक्यं सम्यक् 'किं वा नारीणां स्तनाः' इति आहोस्विदुभयम्।

एवं गावो धनम्, गावो धनानीति वाक्यद्वयमध्ये प्रथमं वाक्यं भवितुमर्हति द्वितीयमेव वा किं वोभयमपि।

एवमादयो बहवोऽन्येऽपि सन्देहा जायन्ते। सन्दिहानाश्च संस्कृतवाग्मा यथा यद्भाषितुं लेखितुञ्च विधातुं न प्रभवन्ति।

अपि च लिङ्गादिविषये विशेषरूपेण बहवो विषया ज्ञातुमिष्यन्ते। यथा लौकिकानां शास्त्रीयानाञ्च पुंस्त्वादीनां कानि लक्षणानि, कथं च लौकिकपुंस्त्वादौ लिङ्गपदवाच्यता, पुंलिङ्गादिशब्दानां च के अर्थाः, एकस्यां व्यक्तौ दारा इत्यादि बहुवचनानां कथं साधुत्वमित्येवमादयः।

न च लिङ्गसंख्ययोर्विषये तत्तत्सन्देहनिराकरणपरः प्रतिपित्सिततत्तदर्थप्रतिपादनपरश्च तन्मात्रविषयकः कोऽपि ग्रन्थः केनापि प्रणीतः प्रणीतो वा नेदानीमुपलभ्यते। यमवलोक्यानायासेन सन्देहा निराक्रियेरन् बोध्यत्वविषयाश्च बुध्येरन्। इत्यालोच्य 'लिङ्ग-

वचनविचार'नामा नाम्नैव विषयद्योतकः स्वल्पकलेवरो ग्रन्थो विरचितः। आशास्यते चैनमभिसमीक्ष्य विचक्षणाः प्रसन्नतामासादयिष्यन्ति, अन्तेवसन्तश्चोपकृता भविष्यन्तीति।

एष हि ग्रन्थः पाणिनीयव्याकरणमहाभाष्यभाष्यप्रदीपप्रदीपोद्योतसिद्धान्तकौमुदी-शब्देन्दुशेखरभूषणदर्पणशास्त्रार्थरत्नावलीव्युत्पत्तिवादगूढार्थतत्त्वालोकपदवाक्यरत्नादि-ग्रन्थानां लिङ्गसंख्यानिरूपणपरान् भागान् समवलोक्य स्वयं भूयो यथामति विचार्य च तथा सरलप्रणाल्या सम्पादितो यथा लिङ्गवचनविषये सन्देहानपाकरिष्यति ज्ञातव्य-विषयॉश्च ज्ञापयिष्यति।

अत्र च लिङ्गनिरूपणभागेऽपि वचनविचारो वचननिरूपणभागेऽपि लिङ्गविचारः प्रसङ्गात् कृत इति लिङ्गविचारो वचनविचारश्चेति ग्रन्थद्वयमिति न वक्तुमुचितमपि त्वेक एव ग्रन्थः।

एतस्मिंश्च बहवः सिद्धान्ताः संक्षिप्य कारिकयोपनिबद्धाः। कतिपये च कारिकानुक्ता अपि निवेदिताः।

सोऽयं कारिकासूचीविषयसूचीभ्यां युक्तो मिथिलासंस्कृतविद्यापीठाध्यक्ष(डाइरेक्टर) महामहोपाध्यायडाक्टरश्रीमदुमेशमिश्रमहोदयानां प्रयत्नेन विहाराधीश्वरेण परमकृपयाङ्गीकृत्य मुद्रापितः। उक्तपीठाध्यक्षमहोदयैः संशोधितः प्रकाशितश्चेति।

मिथिलासंस्कृतविद्यापीठः
दरभङ्गा
संवत् २०११

श्रीदीनबन्धुः

# विषयसूची

श्रीः

# लिङ्गवचनविचार.

अज्ञानध्वान्तपटलविपाटनपटुं गुरुम् ।
नत्वा शिवकुमाराख्यं विख्यातं जगतीतले ॥१॥
अन्तेवासिगणस्वान्तविज्ञातोदयसम्पदे ।
अस्म्यहं लिङ्गवचनविचारं कर्तुमुद्यतः ॥२॥

लिङ्गशब्दस्यानेकार्थत्वात् किं तावल्लिङ्गं विचारविषय इत्यपेक्षायामुच्यते—

### विचारणीयलिङ्गपदार्थकथनम्

पुंस्त्वादिरूपं यल्लिङ्गं शब्दवाच्यतयाऽऽश्रितम् ।
अयं ब्राह्मण इत्यादौ क्रिया व्यावृत्तिहेतवे ॥३॥
यच्च व्याकरणाचार्यैः शब्दशास्त्रप्रवृत्तये ।
लिङ्गमङ्गीकृतं भिन्नमुभयं तद्विचारये ॥४॥

विचारणीयलिङ्गञ्च पुंस्त्वादिरूपं लौकिकं शास्त्रीयं च । तत्र लौकिकलिङ्गं चेतनमात्रमात्रब्राह्मणकुमारादिसामान्यम् । अत एवायं ब्राह्मणोऽयं कुमार इत्यादौ क्रिया व्यावृत्तिः ।

शास्त्रीयन्तु लिङ्गं ततो विलक्षणमेव, व्याकरणशास्त्रे 'तस्माच्छसो नः पुंसि' इत्यादौ निमित्ततयाऽऽश्रीयमाणम् । नहि तत्र लौकिकं लिङ्गं निमित्तमाश्रयितुं शक्यम्, घटादिशब्दादौ नत्वाभावापत्तेः । एतदुभयविधमपि लिङ्गमत्र विचार्यते ॥३-४॥

### लौकिकपुंस्त्वादिषु लिङ्गपदनिर्वचनम्

'घञबन्तः पुंसि', 'अथ लिङ्गानुशासनम्', 'सम्पूर्णमुच्यते वर्गैर्नामलिङ्गानुशासनम्' इत्यादिग्रन्थेषु शास्त्रीयपुंस्त्वादिषु लिङ्गशब्दप्रयोगस्त्ववधार्यते किन्तु लौकिकपुंस्त्वादिषु क्व लिङ्गशब्दप्रयोगः ? तत्रोच्यते—

भावत्त्वात् स्तनवृद्धादौ नाव्याप्तिः, आदिपदेन वयसोऽपि ग्रहणात्। अत एव शिशावपि नाव्याप्तिः। योन्यन्तानिवेशाच्च ब्रह्मचारिणि न सा।

लौकिकस्त्रीत्वन्तु इयं स्त्रीतिव्यवहारप्रवर्तकं 'ब्राह्मणीमानये'त्यादौ पुरुषव्यवच्छेदकम्। तच्च योनिमत्त्वम्। पुंलक्षण इवात्रापि दोषवारणाय रोगाद्यप्रयुक्तमिथुनकर्मोपयोगियोन्यत्वाभावरहितयोनिमत्त्वं स्त्रीत्वमिति निर्वक्तव्यम्। लक्षणसमन्वयः पूर्वोक्तरीत्योहनीयः। यथा चोक्तम्—

"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ॥"

अत्र केशो योनिः, लोम शिश्नः। स्तनेति तूपलक्षणम्। तेनाजातस्तन्यां नाव्याप्तिः। वस्तुतस्तु स्त्रीलक्षणे 'स्तने'ति नैव वाच्यम्।

लौकिकनपुंसकत्वं तु निरुक्तपुंस्त्वस्त्रीत्वोभयशून्यत्वे सति स्त्रीपुंससाधारणावयवशालित्वम्, 'न स्त्रीपुमानि'ति योगार्थानुसारित्वात्। घटादावतिव्याप्तिवारणाय विशेष्यदलम्—इत्याहुः।

वयन्तु ब्रूमः—मेढ्रवत्त्वं लौकिकपुंस्त्वम्। लौकिकस्त्रीत्वं तु योनिमत्त्वम्। न च मुष्कमेढ्रभगान्यतरवन्नपुंसकव्यक्तावतिव्याप्तिरिति वाच्यम्, इष्टापत्तेः। लौकिकनपुंसकत्वं तु रोगाद्यप्रयुक्तमिथुनकर्मयोग्यत्वाभावयुक्तमेढ्रभगान्यतरवत्त्वे सति पुंस्त्वस्त्रीत्वान्यतरप्रयुक्तस्तनश्मश्रुलोमादिशून्यत्वम्। सत्यन्तानिवेशे बालेऽपि 'इयं व्यक्तिर्नपुंसकमि'तिव्यवहारापत्तिः।

यत्र चैतल्लक्षणलक्षितं नपुंसकत्वं तत्र लौकिकपुंस्त्वस्त्रीत्वयोरेकतरं नियतम्। अर्थात् लोकप्रसिद्धनपुंसकत्वं लौकिकपुंस्त्वस्त्रीत्वान्यतरसमानाधिकरणमेव तिष्ठतीति। अत एव मेढ्रवति नपुंसकजने 'अमुना नपुंसकब्राह्मणेन कृतमि'ति प्रयोग उपपद्यते। उपपद्यते च योनिमति नपुंसकजने 'अनया नपुंसकब्राह्मण्या कृत'मिति प्रयोगः। लौकिकपुंस्त्वस्त्रीत्वाभ्यां लौकिकनपुंसकत्वस्य वैयधिकरण्याभ्युपगमे तु नोपपद्येत। तथा हि चेतनमात्रवृत्तिप्रवृत्तिनिमित्तकानां ब्राह्मणकुमारादीनां शास्त्रीयपुंस्त्वस्त्रीत्वशालित्वं, न नपुंसकशालित्वम्। अत एव नपुंसकव्यक्तितात्पर्येणापि 'एतानि ब्राह्मणानी'ति नैव भवति प्रयोगः, शास्त्रीयपुंस्त्वादिकञ्च केवलान्वयि। एवं स्थितौ यदि नपुंसकव्यक्तौ लौकिकपुंस्त्वस्त्रीत्वे न स्वीक्रियेते तदा ब्राह्मणीमानयेत्यादौ पुरुषयोगाभावाय स्वीकरणीयस्य 'चेतनमात्रनिष्ठप्रवृत्तिनिमित्तकात् ब्राह्मणादिपदात् प्रतीयमानशास्त्रीयपुंस्त्वादिसामानाधिकरण्येन तत्तज्जातीयलौकिकलिङ्गमपि प्रतीयत एवे'ति नियमस्य भङ्गापत्तिः। 'अमुना स्त्रीब्राह्मणेने'त्यादौ शास्त्रीयपुंस्त्वसामानाधिकरण्येन नपुंसकव्यक्तिव्यावृत्त-

लौकिकपुंस्त्वस्य भानासम्भवात्, 'अनया क्लीबब्राह्मण्ये'त्यादौ शास्त्रीयस्त्रीत्वसामानाधिकरण्येन नपुंसकजनव्यावृत्तलौकिकस्त्रीत्वस्य भानासंभवाच्च। उक्तनियमस्य भङ्गाभ्युपगमे च उक्तस्य ब्राह्मण्यादिशब्दात् पुरुषबोधप्रसङ्गरूपदोषस्यापत्तेः, नपुंसकस्त्रीबोधतात्पर्येणापि 'अमुना नपुंसकब्राह्मणेने'तिप्रयोगापत्तेश्च, नपुंसकपुरुषबोधतात्पर्येणापि 'अनया ब्राह्मण्या कृतमि'ति प्रयोगापत्तेश्च। मम तु लौकिकं पुंस्त्वं स्त्रीत्वं वा लौकिकनपुंसकत्ववत्यपि जने वर्तत एवेति नोक्तदोषावकाशः। 'अमुना ब्राह्मणेन' 'क्लीबब्राह्मणेन वे'त्यादौ शास्त्रीयपुंस्त्वविशिष्टलौकिपुंस्त्वस्य भानान्न ब्राह्मण्या बोधापत्तिः, न वा 'अनया ब्राह्मण्ये'त्यादितः पुरुषबोधापत्तिः। शास्त्रीयलौकिकलिङ्गयोः साजात्यं च लिङ्गविशेषबोधकसमानशब्दवाच्यत्वेन बोध्यम् ॥६॥

शास्त्रीयपुंस्त्वादिलिङ्गलक्षणानि

साङ्ख्यप्रसिद्धसत्त्वादेर्लिङ्गं परिणतिर्मतम्।
शास्त्रतो ज्ञायते यस्मात् ततः शास्त्रीयमुच्यते ॥७॥
तत्रोपचयभागो यस्तत्पुंस्त्वमभिधीयते।
स्त्रीत्वं त्वपचयो भागः साम्यं क्लीबत्वमुच्यते।
केवलं शास्त्रकार्यार्थमाश्रितं शाब्दिकैर्बुधैः ॥८॥

अथ 'ब्राह्मणोऽयम्', 'ब्राह्मणीयम्' इत्यादौ शब्दशक्त्या प्रतीयमानमपि लौकिकलिङ्ग 'तस्माच्छसो न. पुंसि', 'स्त्रियाम्', 'स्वमोर्नपुंसकात्', इत्यादि व्याकरणशास्त्रेषु न निमित्तम्, 'घटान्' 'खट्वा' 'मधु' इत्यादौ नादेश-टाप्प्रत्ययलुगाद्यभावप्रसङ्गात्। किन्तु तेभ्यो लौकिकलिङ्गेभ्यो विलक्षणं किमप्यन्यदेव। तदुक्तं सरूपसूत्रे भाष्ये—"न वैयाकरणै शक्यं लौकिकं लिङ्गमाश्रयितुम्। अवश्यं कश्चित् स्वकृतान्त आस्थेय। कोसौ स्वकृतान्त? संस्त्यानप्रसवौ लिङ्गमि"ति।

अस्यायमर्थः—संस्त्यान सत्त्वादिगुणानामुपचयरूपः परिणामः, प्रसवः अपचयपरिणाम। तद्द्वयात्मक लिङ्गं वैयाकरणैः शास्त्रेषु निमित्तमाश्रयणीयमिति।

तत्रोपचय पुंस्त्वलिङ्गम् अपचय. स्त्रीत्वलिङ्गमिति विवेकः। तदेवं शास्त्रीयपुंस्त्वस्त्रीत्वे निरूपिते।

अथ शास्त्रीय नपुंसकत्व किम्? तत्र केचित्—सत्त्वरजस्तमोगुणानां यथागमुपचयापचयसमानि क्रमशः पुंस्त्व-स्त्रीत्व-नपुंसकत्वानीत्याहुः। अन्ये तु—सत्त्वादि

गुणानां मध्ये कस्यचिद्गुणस्योपचयः पुंस्त्वम्, अपचयः स्त्रीत्वं, साम्यं नपुंसकत्वम्, न तु गुणत्रयस्य। तत्साम्ये प्रलयस्यैव सिद्धान्तितत्वादिति वदन्ति। परे तु—साम्यं न नपुंसकत्वमपि तु स्थितिः। अत एव तत्र त्रयाणामपि गुणानां वैषम्ये तत्रापि नपुंसकत्व-मुपपद्यते इत्याहुः।

वस्तुतस्तु सत्त्वरजस्तमोगुणानां मध्ये कस्यचिद्गुणस्योपचयाश पुंस्त्वमपचयाश. स्त्रीत्वमिति सम्यगेव। नपुंसकता तु तत्र कस्यचिद्गुणस्य साम्यावस्था अर्थात् उपचयापचयराहित्येन समपरिणामः। तथा चोक्तं सरूपसूत्रभाष्यप्रदीपे कैयटेन—

"गुणानां सत्त्वरजस्तमःपरिणामरूपाणां शब्दादीनां वृद्धिह्रासमध्यमावस्था शब्दैकगोचरा लिङ्गत्वेन परिगृह्यन्ते" इति।

अयमत्र भावः—साम्यसिद्धान्तानुसारेण सर्वे पदार्थाः प्रतिक्षणपरिणामि-गुणत्रयसघातरूपा ऋते पुरुषात्। तत्र कस्यचिद्वृद्धिरूपः परिणामः, कस्यचित् ह्रास-रूपः, कस्यचित्तु वृद्धिह्रासराहित्येन समपरिणामो दीपवन्नियतः। एतादृशा गुण-परिणामा एव तत्तच्छब्दमात्रवेद्याः सूक्ष्मत्वात्प्रमाणान्तरेण दुरधिगमा लिङ्गत्वेन स्वीक्रियन्ते वैयाकरणैः। तेन 'रामस्य दारा मैथिली कुलदैवतमि'ति एकस्मिन् मैथिली-पदार्थे युगपत् पुंस्त्वस्त्रीत्वनपुंसकत्वानां त्रयाणामपि लिङ्गानां भानम्। लौकिक-लिङ्गपरिग्रहे तु तादृशपुंस्त्वादीनामेकत्र समावेशासम्भवात् तदनुपपत्तिः। तटादिषु च कस्यापि तादृशलिङ्गस्यानङ्गीकारेण तटी तटमित्यादौ तत्प्रयुक्तशास्त्रीयकार्यमशक्यमेव स्यादिति।

अत्राय निष्कर्षः—सत्त्वादिगुणपरिणामाः शास्त्रीयलिङ्गम्। तद्विशेषो वृद्धि-परिणामः पुंस्त्वम्। ह्रासपरिणामः स्त्रीत्वम्। समतया परिणामो नपुंसकत्वम्। गुणपरिणामसामान्यधर्मो लिङ्गत्वम्। तद्व्याप्यानि तु पुंस्त्वत्वादीनीति।

ननु यदा सत्त्वादिगुणानां त्रयाणामप्युपचयपरिणाम एव, न कस्यापचय-परिणामो न वा समपरिणामस्तदा अपचयरूपस्त्रीत्वाभावात् साम्यपरिणतिरूपनपुंसकत्वविरहाच्च तत्र तदा इयं व्यक्तिरिति इदं वस्त्विति च व्यवहारस्यानुपपत्तिरिति चेन्न। न ह्येकदा त्रयोऽपि गुणा उपचीयन्तेऽपचीयन्ते वा, किन्तु यदैको गुण उपचीयते तदाऽपरः कश्चिद्गुणोऽपचयं यात्येव। तृतीयस्तु कश्चित् सम एवावतिष्ठते इति नियमात्।

इत्थमेव गुणपरिणतिसाम्यमेव कथमवधारणीयमिति चेत्—पदार्थतत्त्वविदः मुनेर्महाभाष्यकारस्य पतञ्जलेर्वचनादिति गृहाण। उक्तं हि तेन सरूपसूत्रे— तथा च

सर्वत्र" इति। उपचयापचयोभयं सर्वत्र पदार्थे वर्तते इति तदर्थः। यदि तु कदाचित् कुत्रचिद्वस्तुनि सकलगुणानामुपचय एवापचय एव वा स्यात् तदा उभयं सर्वत्रेति कथनमसंगतं भवेत्।

नन्वेतावतापि गुणोपचयापचययोरेव सार्वत्रिकत्वं प्रमाणीकृतं भवति न पुनः साम्येन गुणपरिणतिरूपनपुंसकत्वस्य। तथा च कदाचित् साम्येन परिणतिविरहदशायां तत्र 'इदं वस्तु' इतिव्यवहारानुपपत्तिरिति चेत्—अत्रोच्यते—समपरिणामोऽपि सार्वत्रिक इत्यपि भाष्यकारोक्त्यैव गम्यते। उक्तं हि तत्रैव भाष्ये—

"यद्युभयं सर्वत्र, कथं लिङ्गव्यवस्था? विवक्षातः। उपचयविवक्षायां पुमान्। अपचयविवक्षायां स्त्री। उभयोरप्यविवक्षायां नपुंसकम्" इति।

अस्यायमभिसन्धिः—वक्त्रा विवक्षितोऽर्थस्तद्बोधकशब्देन प्रत्याय्यते। तत्तदर्थबोधकता तु शब्दानां नियता। अतो यदाऽर्थे उपचयांशो विवक्षितस्तदा तद्बोधकपदार्थादिशब्देन स एव बोध्यते। यदा चापचय एव विवक्षितस्तदा तद्बोधकव्यक्त्यादिशब्देन स एव प्रत्याय्यते। यदा पुनरेतदुभयं न विवक्ष्यते अपि तु साम्येन परिणाम एव विवक्षितो भवति तदा तद्बोधकवस्त्वादिशब्देन तदेव (नपुंसकत्वमेव) बोध्यते। एवञ्च सर्वत्र सर्वलिङ्गसत्त्वेऽपि तद्व्यवस्थेति।

यद्यपि साम्यविवक्षायां नपुंसकमिति स्पष्टं नोक्तं भाष्ये तथापि "गुणानां वृद्धिह्रासमध्यमावस्था लिङ्गत्वेन परिगृह्यन्ते" इति कैयटव्याख्यानुसारेण तत्रैव भाष्यतात्पर्यं लभ्यते। किञ्च यज्जातीयं पुंस्त्वं स्त्रीत्वं च नपुंसकत्वेनापि तज्जातीयेनैव भाव्यम्। तथा च पुंस्त्वस्त्रीत्वे यदि गुणपरिणतिरूपे तर्हि नपुंसकत्वस्यापि गुणपरिणामरूपतैवोचिता। गुणपरिणामाश्चोपचयापचयसाम्यरूपा एवेति युक्तं नपुंसकत्वस्य गुणसाम्यावस्थारूपत्वम्।

अत्रेदं बोध्यम्—सांख्यदर्शने प्रकृतिः पुरुषश्च द्वावेव पदार्थौ। तत्र सत्त्वरजस्तमोगुणत्रयात्मिका प्रकृतिः। सा च प्रतिक्षणपरिणामिनी। तत एव पुरुषभिन्नं सर्वमेव विश्वमुत्पद्यते। अतः कार्यकारणयोरभेदोपगमेन समस्तं जगत् त्रिगुणात्मकम् पुरुषस्त्वपरिणामी चेतनश्चेति सिद्धान्तः।

वैयाकरणाश्च व्याकरणप्रक्रियानिर्वाहाय सांख्यमतमनुसृत्य तन्मते स्थितानेव गुणपरिणामान् लिङ्गपदेन, तद्विशेषाँश्च वृद्धिह्राससाम्यपरिणामान् क्रमशः पुंस्त्वस्त्रीत्वनपुंसकत्वशब्दैः तद्गतजातिविशेषाँश्च पुंस्त्वत्वादिशब्दैः परिभाषन्ते स्म।

न्यायादिदर्शनप्रवर्तकाचार्यास्तु व्याकरणतो वा स्वयमेव वा परिशुद्धा देववाणीमवगतवन्तो व्यवजह्रुरिति प्रयोजनविरहेण लिङ्गनिरूपणेपूदासीना एव। एतेन न्यायादिनय पदार्थानां सत्त्वादिगुणात्मकत्वानङ्गीकारेण तन्मते किन्नाम शास्त्रीयलिङ्गमिति शङ्का समाहिता।

आत्मादिपदार्थे आरोपितमेव पुंस्त्वादि

नन्वेवमपि आत्मना साङ्ख्यसिद्धान्तानुसारेणापि सत्त्वादिगुणानात्मकत्वेन तत्रोक्तपुंस्त्वाद्यभावात् "सर्गेनात्मनो नित्यानवेहि। नित्यानन्दघना चिदेव परं ब्रह्म" इत्यादौ पुंस्त्वादिनिमित्ता नतवक्षीप्रत्ययाम्लुकः कथं प्रवर्त्तन्ताम्? उच्यते—तत्र पुंस्त्वाद्यारोपादेव तन्निमित्तकविधयः प्रवर्तन्ते। यथारोपितमपि बहुत्वमाश्रित्य दारलाजादिषु नामलिङ्गानुशासनकोपर्बोधितनित्यबहुत्वसङ्ख्यावाचकत्वेषु 'बहुषु बहुवचनमि'ति शास्त्रप्रवृत्तिः तथा कोषादिबोधितनित्यलिङ्गकचिदादिशब्देष्वपि आरोपितलिङ्गमाश्रित्य शास्त्रप्रवृत्तेः स्वीकारात्।

पुमादिशब्दव्युत्पत्तिः

'पूञो डुम्सुन्' इत्यौणादिकसूत्रेण पुनातीति विग्रहे 'पुम्स्'शब्दः सिद्धः, तस्य पुमान् पुमांसावित्यादीनि विभक्त्यन्तरूपाणि। तत्र पुनातीति विग्रहमात्रम्, न तु तदर्थानुगमः। अस्य प्रवृत्तिनिमित्तं हि प्रोक्तलक्षणं लौकिकं शास्त्रीयं च पुंस्त्वम्, 'अन्यद्धि व्युत्पत्तिनिमित्तमन्यत् प्रवृत्तिनिमित्तमि'त्युक्तत्वात्।

सरूपसूत्रे भाष्ये तु "लोके कर्तृसाधनः सूते इति पुमान्, सूतेः सप्" इत्युक्तम्। एतदनुसारेण सूधातोः कर्तरि डुम्सुनि धातो सकारस्य पकारादेशे च 'पुम्स्'शब्दः सिद्ध्यतीति लभ्यते। तत्र सूते इत्यस्य 'योनिरूपे आधारे शुक्रं त्यजतीत्यर्थः' इत्युद्द्योते नागेशः। परन्त्वेवं साधनेऽपि पुम्सूशब्दस्य पूर्वोक्तमेव प्रवृत्तिनिमित्तं मन्तव्यं न तु शुक्रत्यागकर्तृत्वम्, अत एव बालेपि पुमानयमिति व्यवहारः।

स्त्रीशब्दस्तु संघातार्थकस्य स्त्यैधातोरधिकरणे ड्रटि सिद्धः। स्त्यायतः संघीभवतः शुक्ररजसी यस्या सा स्त्रीति विग्रहः। अत्रापि पूर्वोक्तमेव प्रवृत्तिनिमित्तं बोध्यम्।

नपुंसकशब्दव्युत्पत्तिस्तु न स्त्री पुमानिति न भ्राडित्यादिसूत्रेण निपातनात् स्त्रीपुंसस्य पुंसकादेशः प्रकृतिभावान्नलोपाभावः। अत्रापि पूर्वोक्तमेव प्रवृत्तिनिमित्तं बोध्यम् ॥७-८॥

पुमादिशब्दप्रयोगविचारः

क्वचिद्धर्मपराः क्वापि स्वार्थबोधकलक्षकाः।
पुमादिशब्दा विज्ञेयाः क्वचिद्धर्मिसमर्पकाः ॥९॥
पुंलिङ्गादौ धर्मपराः परिज्ञेयाः पुमादयः।
'पुमान् पाप्मे'त्यादिवाक्ये स्वार्थबोधकलक्षकाः ॥१०॥

पुंस्त्रीनपुंसकशब्दाः पुंस्त्वादिधर्मविशिष्टशक्ताः। ते च क्वचित् धर्ममात्र-बोधतात्पर्येण प्रयुज्यन्ते। यथा 'घटशब्दः पुंलिङ्गः', 'गङ्गाशब्दः स्त्रीलिङ्गः', 'धनशब्दो नपुंसकलिङ्ग' इति। एषु लिङ्गपदार्थे सामानाधिकरण्येनान्वितार्थकत्वात् पुमादयः शब्दा लक्षणया धर्ममात्रबोधकाः, पुंस्त्वं लिङ्गमर्थो यस्य स इत्यादिबोधात्।

क्वचित् स्वार्थबोधकतात्पर्येण प्रयुज्यन्ते; यथा 'पुमान् पाप्मा', 'सुमनसः स्त्रिय' इति। अत्र हि पुमानित्यादयः पुमाद्यर्थबोधकपराः, पाप्मशब्दः पुंस्त्वविशिष्टार्थ-बोधकः, सुमनश्शब्दः स्त्रीत्वविशिष्टार्थबोधक इत्यादिबोधात्, शास्त्रीयमपि लिङ्गमर्थ-निष्ठमेवेति वक्ष्यमाणतया यथाश्रुतार्थपरत्वायोगात् कोषस्थशब्दानां च शब्द-परत्वात् ॥९-१०॥

यद्वा पङ्काद्यस्तत्तत्पदार्थत्वेन बोधकाः।
पुमानित्यादिशब्दानां श्रुतार्थपरता ततः ॥११॥
'पुमानयं जनः', 'स्त्रीयं व्यक्ति'रित्यादिवाक्यगाः।
धर्मिणं ब्रुवते स्वार्थं लक्षणाऽपेक्षणाद्विना ॥१२॥

यद्वा कोषे शब्दा अर्थपरा इति शेखरकृतोक्तत्वात् पङ्कपदार्थाभिन्नः पाप्मपदार्थ इति बोधः। तत्र पङ्कपदार्थे अस्त्रीत्वभेदेनान्वेति, पाप्मपदार्थे च पुमानिति। एवञ्च स्त्रीत्व-विशिष्टभिन्नाभिन्नपङ्कपदार्थाभिन्न' पुरुषविशिष्टाभिन्नपाप्मपदार्थ इति बोधात् स्त्रीपुमादिपदं यथाश्रुतार्थपरमपि संभवति।

एतच्च पुमादिशब्दस्य प्रथमान्तत्वे, सप्तम्यन्तत्वे तु "पुंसि क्लीबे च काकोलकाल-कूटहलाहला" इत्यादौ काकोलादयः शब्दपरा एव। तथा च काकोलादय' शब्दाः पुंसि (पुंस्त्वविशिष्टेऽर्थे) क्लीबे क्लीबत्वविशिष्टे च शक्ताः पर्याया इति बोध'।

क्वचित् पुमादयः स्वार्थपरा एव। यथा अयं पुमान् इयं स्त्रीति अत्र च न लक्षणाऽपेक्षितेति ॥११-१२॥

### पुंलिङ्गशब्दादेर्विग्रहः

अथ 'पुंलिङ्गो घटशब्दः" इत्यत्र पुंलिङ्ग इति बहुव्रीहेः को विग्रहः ? न तावत् पुमान् लिङ्गं यस्य स इति, पुंस्त्वादिरूपे लिङ्गपदार्थे पुंस्त्वविशिष्टार्थाभेदस्य बाधितत्वात्। नापि पुंशब्दस्य धर्मपरत्वमङ्गीकृत्य पुमान् नाम पुंस्त्वं लिङ्गं यस्येति विग्रहः कर्तुं शक्यः, षष्ठ्यर्थबहुव्रीहेः स्वस्वामिभावाधाराधेयभावादिकतिपयनियतसम्बन्धेनैव सम्बन्धिनोऽन्यपदार्थस्य बोधने सामर्थ्यात्, वाच्यवाचकत्वसम्बन्धेन सम्बन्धिनमन्यपदार्थं बोधयितुमसामर्थ्यात्। अत एव कृष्णकलशशब्दो नीलघट इति न प्रयोगः नीलो घटो यस्येति विग्रहकनीलघटरूपबहुव्रीहेर्नीलघटार्थक इति बोधाजननात्।

अत्राय प्रश्नः—अनेकमन्यपदार्थे इति बहुव्रीहिविधायकेऽत्र नियमः स्वलौकिकविग्रहीभूतं यद्वाक्यं स्वघटकया च येन यस्मै यस्मात् यस्य यस्मिन्निति द्वितीयादिविभक्त्या स्वघटकैकप्रथमान्तपदार्थान्वयितदितरपदार्थानुयोगिकं यं सम्बन्धं प्रतिपादयितुमीष्टे तत्प्रतियोगिकसम्बन्धवत्यन्यपदार्थे बहुव्रीहिर्भवतीति। तथा पीताम्बर इति बहुव्रीहेः पीतमम्बरं यस्य स इति लौकिकविग्रहवाक्यम्, तत्र स्वघटकयस्येति षष्ठ्या स्वघटकपीतमिति प्रथमान्तपदार्थान्वय्यम्बरमिति प्रथमान्तपदार्थानुयोगिकं संयोगसम्बन्धं बोधयितुं शक्नोति। अतोऽम्बरपदार्थप्रतियोगिकसंयोगसम्बन्धवति हरावन्यपदार्थे बहुव्रीहिर्जायते पीताम्बर इति।

एवं चित्रा गावो यस्येति लौकिकविग्रहवाक्यस्य स्वघटकयस्येतिषष्ठ्या चित्रान्वयिगवानुयोगिकं स्वस्वामिभावरूपं सम्बन्धं बोधयितुमीष्टे। अतो गोप्रतियोगिकतत्सम्बन्धवति चैत्ररूपेऽन्यपदार्थे चित्रगुरिति भवति बहुव्रीहिः।

एवं यं प्राप्तो ग्रामः स इति विग्रहवाक्यं स्वघटकया यमितिद्वितीयया स्वघटकग्रामपदार्थान्वयिप्राप्तिपदार्थैकदेशप्राप्त्यनुयोगिकं कर्मतासम्बन्धं बोधयति, वैयाकरणमते पदार्थभूतस्यापि विभक्त्यर्थस्य सम्बन्धविधया भानोपगमात्। अतः प्राप्तिप्रतियोगिककर्मतासम्बन्धेन सम्बन्धिन्यन्यपदार्थे प्राप्तग्राम इति बहुव्रीहिः, एवं घटो विषयो यस्येति विग्रहको घटविषयको बोध इति भवति प्रयोगः, न पुनः नीलघटो बोध इति, नीलो घटो यस्येति विग्रहस्य कर्तुमशक्यत्वात्। तस्मात् पुंलिङ्गशब्दस्य पुंस्त्वं लिङ्गं यस्येति वा पुंस्त्वं लिङ्गं वाच्यं यस्येति वा न भवितुमर्हति विग्रहः इति चेत्—अत्रोच्यते—

लिङ्गार्थलक्षक लिङ्गपदमादाय जायते ।
पुंलिङ्गादिबहुव्रीहिरलिङ्गमिति शब्दवत् ॥१३॥

पुमादिपदस्य पुंस्त्वादिधर्मपरत्वं, लिङ्गशब्दस्य लक्षणया लिङ्गरूपार्थपरत्वमूरीकृत्य पुंस्त्वं लिङ्गमर्थो यस्येति विग्रहे पुंलिङ्गादिबहुव्रीहिरुपपादनीयः। इत्थमेव हि अलिङ्गे युष्मदस्मदी इति, स्वरादीतिसूत्रे भाष्ये अलिङ्गमसंख्यमिति वा इति चोपपद्यते। अनया तु रीत्या नीलघटोऽर्थो यस्य स इति विग्रहको नीलघटः कृष्णकलसशब्द इत्यादिबहुव्रीहिप्रयोगास्तु अनभिधानान्न भवन्तीति ॥१३॥

पुमादीनां शास्त्रीयं लौकिकञ्च पुंस्त्वादि वाच्यम्

पुमादीनाञ्च पुंस्त्वादि शास्त्रीयं लौकिकं तथा ।
द्विविधं कारणं ज्ञेयं पर्यायेण प्रवर्तने ॥१४॥
नपुंसकक्लीबपण्डप्रभृतेरेव लौकिकम् ।
नपुंसकत्वमर्थोऽस्ति घटादीनां घटत्ववत् ॥१५॥

पुंस्त्रीनपुंसकादिशब्दा लौकिकं शास्त्रीयं च पुंस्त्वादि यथायथं प्रवृत्तिनिमित्तमुपादाय प्रवर्त्तन्ते। तत्र यदा लौकिकं पुंस्त्वादि निमित्तमाश्रित्य प्रयुज्यन्ते अयं पुमान्, इयं स्त्री, अयमियं वा नपुंसकमिति तदा कोपाद्युक्तमीयशास्त्रीयलिङ्गमपि तत्तल्लौकिकलिङ्गसामानाधिकरण्येन बोधयन्त्येव।

अत एव शुचीन् पुंस आनयेत्यत्र शास्त्रीयपुंस्त्वनिमित्तकं नत्वं सिद्ध्यति। तत्र पुंशब्दस्य शास्त्रीयपुंस्त्वबोधकत्वाभावे तु शुचिशब्दस्य विशेष्यनिघ्नतया शास्त्रीयपुंस्त्वबोधकत्वाभावात् पुंसीति नत्वं न स्यात्। न स्यादेयं स्त्रीत्यत्र शास्त्रीयस्त्रीत्वनिमित्तको ङीप्। एवमभ्यागतान् क्लीवान् पश्येत्यत्रापि न स्यान्नत्वम्।

यदा तु पुमादयः शास्त्रीयमेव पुंस्त्वादि प्रवृत्तिनिमत्तमाश्रित्य प्रयुज्यन्ते पुमान् पाप्मा, खट्वा स्त्री, धनं नपुंसकमिति तदा शास्त्रीयपुंस्त्वादेः प्रवृत्तिनिमित्तरूपेणोक्तत्वेन शास्त्रीयलिङ्गप्रयुक्तकार्यसिद्ध्या तद्विशिष्टे तस्यास्थित्या च द्विः पुंस्त्वादिकं न बोधयन्ति।

एतेन पुमादीनां स्वप्रवृत्तिनिमित्तपुंस्त्वादिना सह शास्त्रीयलिङ्गस्यापि बोधजनकत्वे प्रातिपदिकार्थेतिसूत्रस्थभाष्यासंगतिः। तत्र हि प्रातिपदिकार्थमात्रे प्रथमेत्यंशस्योदाहरणानि

पुमान् स्त्री नपुंसकमिति प्रदर्शितानि, न तु प्रातिपदिकार्थापेक्षया लिङ्गाधिक्ये प्रथमेत्यं-शस्येति निरस्तम्। तत्र शास्त्रीयलिङ्गप्रवृत्तिनिमित्तकानामेव पुमानित्यादीनामुदाहरणत्वेन कथनात्। एवञ्च लौकिकप्रवृत्तिनिमित्तकाः अयं पुमान् इत्यादयो लिङ्गाधिक्ये प्रथमेत्यंशस्यैवोदाहरणत्वेन बोध्याः। भाष्ये तु तथा विविच्य नोक्त इत्यन्यदेतत्।।१४-१५।।

लिङ्गज्ञानोपायः

शास्त्रीयलिङ्गविज्ञानं शास्त्रेण खलु जायते।
लौकिकस्य तु लिङ्गस्य प्रत्यक्षेणावगम्यता ।।१६।।

पुंस्त्रीनपुंसकव्यक्तीनां लक्षणरूपं लौकिकं लिङ्गमाकृतिग्राह्यमिति प्रत्यक्षेणैवावगन्तुं शक्यम्। इयं स्त्री, अयं पुमान्, एष जनो नपुंसकमित्याद्युपदेशेन च। न तु घञबन्तः पुंसि इत्यादिव्याकरणानुशासनेन, नापि कोषेण, ताभ्यां लौकिकलिङ्गानुपदेशात्।

शास्त्रीयन्तु गुणोपचयापचयादिरूपं लिङ्गं घञबन्तः पुंसि देवताः स्त्रियाम् इत्यादिशास्त्रेणैवावगन्तुं योग्यम्, न प्रत्यक्षेण। सत्त्वादिगुणा एव हि तावद्दुरधिगमास्तर्हि तत्परिणतिरूपं लिङ्गं शास्त्रमन्तरेण कथमिवावधारणीयं स्यात्।

लिङ्गानुशासनञ्च द्विविधम्—घञबन्तः पुंसि स्त्रियां क्तिन् इत्यादिशास्त्ररूपं कोषरूपं च। न च कोषो नानुशासनमिति मन्तव्यम्। अमरसिंहकृतकोषस्य नामलिङ्गानुशासनसंज्ञाया अन्वर्थत्वान्यथानुपपत्त्या कोषाणामपि लिङ्गानुशासनत्वात्।।१६।।

लिङ्गस्य प्रसिद्धत्वाप्रसिद्धत्वज्ञानोपायः

लिङ्गे प्रसिद्धिविज्ञानं नामलिङ्गानुशासनात्।
तत्तल्लिङ्गे प्रयोगाणां दर्शनादपि जायते ।।१७।।

कोषव्याकरणयोस्तत्तल्लिङ्गबोधकत्वेन प्रतिपादिताः शब्दाः प्रसिद्धेष्वेव लिङ्गेषु प्रयोक्तव्याः। प्रसिद्धिश्च पुराणेतिहासप्राचीननिबन्धकाव्यनाटकाख्यायिकादिषु प्रचुरं प्रयुज्यमानत्वात्। न हि व्याकरणे कोषे वा प्रोक्तं लिङ्गं सर्वमेव प्रसिद्धम्। तद्यथा अर्द्धर्चाः पुंसि चेति सूत्रेणार्द्धर्चादीनां पुंस्त्वं नपुंसकत्वं चानुशिष्टम्। अर्द्धर्चादिगणे च शरीरघृतादयोऽपि पठिताः सन्ति। परन्तु तेषां नपुंसके एव प्रयोगा दृश्यन्ते, न पुंसि। अतस्तेषां पुंस्त्वमप्रसिद्धमिति न ते तत्र प्रयोक्तव्याः। अत एवामरसिंहेन तेषां नपुंसकत्वमेव बोधितम्

एवं तर्हि तेषामर्द्धर्चादिषु पाठो नोचितः किम् ? उचित एव, लोकवेदसाधारणत्वात्। अथ शब्दानुशासनमित्यस्य व्याख्याने केषां शब्दानामनुशासनमिति पृष्टे लौकिकानां वैदिकानां चेति भाष्यकृतोक्तत्वात्। उक्तं चामरसिंहेनापि—

"अर्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवम्।
तन्नोक्तमिह, लोकेऽपि तच्चेदस्त्यस्तु शेषवत् ॥" -

एवं वा पुंसि पद्ममित्यादिना पद्मादेः पुंस्त्वशक्तिरपि बोधिता, परन्तु पुंस्त्वं तस्याप्रसिद्धमेव। कोषा अपि प्रायेण लोकवेदसाधारणशब्दविषया इति पद्मादेः पुंस्त्वशक्तिकथनस्य न वैयर्थ्यम्।

विषयोऽयं लिङ्गभिन्नेऽप्यर्थे। तथा हि ते ते शब्दास्तत्तदर्थे नाना कोषेषु प्रतिपादिता अपि प्रसिद्धिमनुसृत्यैव प्रयोक्तव्याः। यथा हेमचन्द्रकोषे—

"क्रोडा हारा च दारा च त्रय एते यथाक्रमम्।
क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः" ॥

इति हारदारशब्दौ टावन्तावप्युक्तौ। परन्तु तयोरटावन्तयोरेव प्रयोगो दृश्यते। यथा—

"हारो नारोपितः कण्ठे मया विश्लेषभीरुणा।
इदानीमन्तरे जाताः पर्वताः सरितो द्रुमाः" ॥
"नमयति धनुरैशं यस्तदारोपणेन
त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दाराः" ॥

अतो हारादाराशब्दावप्रयुक्तत्वादप्रसिद्धत्वान्न प्रयोक्तव्यौ। एवमन्यशब्दविषयेऽप्यनुसन्धेयम्।

यद्यपि नानाग्रन्थावलोकनपूर्वकः कस्य शब्दस्य किं लिङ्गं प्रसिद्धं किं वाप्रसिद्धमिति निर्णयो बहुपरिश्रमबहुलकालसापेक्षस्तथापि अमरसिंहनिर्मितेनामरकोषनाम्ना प्रसिद्धेन नामलिङ्गानुशासनेन तथा निर्णयः सुकरः। तत्र हि ये शब्दा यस्मिन्नर्थे प्रसिद्धास्ते तस्मिन्नेवार्थे प्रतिपादिताः। येषां च यदेव लिङ्गं प्रसिद्धं तेषां तदेव लिङ्गमुक्तमस्ति। अतस्तदनुसारेण प्रयोक्तॄणां नाप्रसिद्धप्रयोगकलङ्कसम्भवः।

नन्वमरकोषेऽपि दैवतपद्मादीनां पुंस्त्वमपि प्रतिपादितमस्ति, किन्तु तन्न प्रसिद्धम्। तस्मादमरोक्तानामपि शब्दानां तदुक्तसकललिङ्गे न प्रयोगयोग्यत्वमिति चेत्—न। अमरसिंहेन दैवतादेः पुंस्त्वादि न प्रसिद्धमिति स्वयमेव शैल्या सूचितत्वात्।

अमरकोषशैली

एषा ह्यमरकोषशैली— १ रूपभेदेन, २ साहचर्येण, ३ विशेषोक्त्या, ४ द्वयोरिति-कथनेन, ५ यत्किञ्चिल्लिङ्गनिषेधमुखेन, वा यल्लिङ्गं बोध्यते तत्प्रसिद्धम्।

यत्तु रूपभेदेनाबोधितं सत् वाशब्दसहितेन पुंसीत्यादिना बोध्यते तत् अप्रसिद्धम् यस्य च यल्लिङ्गं कोशान्तरयुक्तमपि स्वेन न बोध्यते तस्य शब्दस्य तदपि लिङ्गमप्रसिद्ध-मिति।

तत्र १ रूपभेदेन यथा—मेघपुष्पं घनरसः। २ साहचर्येण—नीवृज्जनपदौ। अत्र जनपदशब्दस्य रूपविशेषेण पुंस्त्वनिर्णयात् तत्साहचर्येण नीवृत् पुमानिति निर्णयः। ३ विशेषोक्त्या— पुंसि क्लीबे च काकोलकालकूटहलाहलाः, स्त्रियां प्रावृट्। ४ द्वयोरिति कथनेन—द्वयोः पाटलिः। मिथुने तु द्वयोरिति इति परिभाषणात् द्वयोरित्यनेन स्त्रीपुं-सयोर्ग्रहणम्। ५ निषेधमुखेन— अर्गलं न ना, घर्मोऽस्त्री। अत्र पुंस्त्वनिषेधेन अत्र शिष्टयोः स्त्रीत्वनपुंसकत्वयोर्ग्रहणम्। स्त्रीत्वनिषेधेन चावशिष्टपुंस्त्वनपुंसकत्वयोर्निर्णयः, निषिद्धलिङ्गं शेषार्थमिति परिभाषितत्वात्।

अथ च 'दैवतानि पुंसि वा'। अत्र दैवतशब्दस्य पुंस्त्वं दैवत इति स्वरूपेणाबोधितं सत् पुंसि वेति बोधितत्वादप्रसिद्धमिति सूच्यते, एवं 'वा पुंसि पद्म'मित्यादावपि बोध्यम्। विकल्पेन बोधितयोर्लिङ्गयोर्मध्ये यल्लिङ्गं स्वरूपेण अर्थात् तत्प्रयुक्तामादिकार्यमुखेन बोध्यते तदेव प्रसिद्धमिति। उभयोः प्रसिद्धत्वे हि पुंनपुंसकयोरिति वदेत् अस्त्रियामिति वा। अनुक्तत्वेन यथा 'शरीरं वर्ष्म विग्रहः'। अत्र शरीरशब्दस्य पुंस्त्वं नोक्तमिति अर्धर्चा इति शास्त्रोक्तमपि न प्रसिद्धमिति। एवं नैरृतशब्दस्य कोषान्तरोक्तं स्त्रीत्वं न प्रसिद्धममरसिंहेनोपेक्षितत्वात्।

यत्तु एवंविधशैल्याः सत्त्वे 'वा तु क्लीबे दिवसवासरौ' इत्युक्ततया दिवसवासर-योर्नपुंसकत्वस्यापि अप्रसिद्धत्वापत्तिः, इष्टापत्तिस्तु न 'कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ' इति महाकविप्रयोगविरोधात्। अतो लिङ्गस्य प्रसिद्धत्व-मप्रसिद्धत्वं वा काव्यादौ तथाप्रयोगदर्शनादर्शनाभ्यामेव निर्णेयमिति—तन्न, अ-

मरकतविना नपुंसके वासरशब्दस्य प्रयुक्तत्वेऽपि तस्य पुंस्येव प्रचुरप्रयोगदर्शनेन तद्वाच्यं नपुंसकत्वमप्रसिद्धमेवेत्यमरसिंहस्याशयात्। एवं दिवसशब्दस्यापि। तस्मात् प्रोक्त-लिङ्गप्रसिद्धत्वाप्रसिद्धत्वविषयामरशैली मन्तव्यैवेति ॥१७॥

शास्त्रीयमपि लिङ्गमर्थनिष्ठमेव

शास्त्रीयस्यापि लिङ्गस्य स्थितिरर्थे सुनिश्चिता।
तस्य शब्दगतत्व हि सहते न विचारणाम् ॥१८॥

अथ लौकिकं लिङ्गमर्थनिष्ठमिति निर्विवादमेव, परन्तु शास्त्रीयलिङ्गं शब्दनिष्ठमर्थ-निष्ठं वेति विवादास्पदम्। तत्र सन्देहबीजन्तु 'अर्धं नपुंसकम्', 'अस्त्री पङ्कं पुमान् पाप्मा', इत्यादिदर्शनेन तस्य शब्दगतत्वं लभ्यते, पुमादिशब्दानां पुंस्त्वादिविशि-ष्टार्थपरत्वात्। तस्य च शब्दनिष्ठत्वेऽपि यथाकथञ्चित् शास्त्रीयकार्याणि निर्वाहयितुं शक्यान्येव।

अथ च 'देवताः स्त्रियाम्', 'अर्धर्चाः पुंसि' चेत्यादिदर्शनेन तु लिङ्गस्यार्थगतत्वं लभ्यते एवं स्वीकारेऽपि शास्त्रीयकार्यनिर्वाहे न काचिद्बाधेति।

तत्र निर्णीयते लिङ्गमर्थनिष्ठमेव लौकिकलिङ्गस्यार्थनिष्ठतया शास्त्रीयलिङ्गस्यापि तथात्वौचित्यात् भगवता पाणिनिमुनिना प्रातिपदिकार्थलिङ्गेत्यादिशास्त्रेण लिङ्गे प्रथमा-विधानाच्च, प्रातिपदिकार्थमात्रे विवक्षिते तदपेक्षयाधिके लिङ्गमात्रे वा विवक्षिते प्रथमेति तदर्थात्। न्यायनये शब्दस्य शाब्दबोधे भानाभावेन तद्गतत्वेनाभिमतस्य लिङ्गस्य प्रथमया बोधयितुमशक्यत्वाच्च। अत एव 'देवताः स्त्रियां', 'नपुंसके प्रातिपदि-कस्ये'त्यादिकं संगच्छते। 'अर्धं नपुंसकम्', 'अञ्जलि पुमान्' इत्यादौ नपुंसकादि-शब्दास्तु नपुंसकत्वपुंस्त्वादिबोधकपराः इति न तदसागत्यम्। न च यथाश्रुतार्थपरत्व-संभवे लक्ष्यार्थपरत्वं नोचितमिति वाच्यम्, अत्र यथाश्रुतार्थपरत्वस्य त्वन्मते संभवेऽपि 'दैवतानि पुंसि वे'त्यादौ शक्यार्थलक्ष्यार्थयोरुभयोरप्यसंभवात्।

तथा चाह भाष्यकारः—'एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्व'मिति। अस्यार्थः एकस्मिन्नर्थे जलादिरूपे शब्दान्यत्वात् धनरस आपो जलमिति शब्दभेदात् विभिन्न-लिङ्गार्थकशब्दप्रयोगाल्लिङ्गाना भेदो ज्ञायते इति। एतच्च भाष्यं लिङ्गभेदसाधनपरम्। एकार्थे इत्युक्त्या च लिङ्गानामर्थनिष्ठत्वं सिद्धवत्प्रतिपादितम्।

शास्त्रीयलिङ्गस्य शब्दनिष्ठत्वसमर्थनम

एतेन यदुक्तं वैयाकरणभूषणे सत्त्वरजस्तमोगुणानां साम्यं नपुंसकत्वम्, आधिक्यं पुंस्त्वम्, अपचयः स्त्रीत्वं तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यं च। तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते। केषांचिदनेकलिङ्गत्वव्यवहारस्तु समानानुपूर्वीकत्वेन शब्दानामभेदारोपात्। एवञ्च पदार्थपदे पुंस्त्वमेव, व्यक्तिपदे स्त्रीत्वमेव, वस्तुपदे नपुंसकत्वमेवेति सर्वत्रैवायं पदार्थः इयं व्यक्तिरिदं वस्त्विति व्यवहारस्तटस्तटी तटमिति चोपपद्यते। तत्र लिङ्गमर्थपरिच्छेदकत्वेनान्वेतीति पश्वादिशब्दोक्तं पशुस्त्रियां नास्तीति पशुनेत्यादिर्विधिर्न छागादीनङ्गत्वेन प्रयोजयतीति—

तदपास्तम्। शब्दगतधर्मेणार्थपरिच्छेदस्य दुरुपपादत्वात् शब्दे च शास्त्रीयस्यैव लिङ्गस्य सम्भवेन तस्य च केवलान्वयितयार्थव्यावर्तकत्वासम्भवाच्च उभयं सर्वत्रेति भाष्येण पुंस्त्वादेरविरोधलाभेन तमेव विरुद्धधर्ममादायेति कथनस्य चिन्त्यत्वाच्च॥१८॥

ब्राह्मणादीनां युगपच्छास्त्रीयलौकिकोभयलिङ्गबोधकता

ननु ब्राह्मणीशब्दात् पुरुषस्य कुतो न बोधः? अथ स्त्रियां स्त्रीप्रत्ययविधानात् स्त्रिया एव बोध इति चेत्—न। शास्त्रीये एव स्त्रीत्वे तद्विधानात् तस्य च केवलान्वयितया पुरुषेऽपि सद्भावात्। एवं ब्राह्मणोऽयमित्यतो न कुतः स्त्रीव्यक्तिबोधः? अत्रोच्यते—

जनादिशब्दभिन्नानां केवलप्राणिवाचिनाम्।
शास्त्रीयं लौकिकञ्चापि वाच्यं लिङ्गद्वयं मतम्॥१९॥
स्वसजातीयशास्त्रीयलिङ्गेन सह बुध्यते।
नियमाल्लौकिकं लिङ्गं ब्राह्मणक्षत्रियादितः॥२०॥
तेनेयं ब्राह्मणीत्युक्ते पुरुषो नैव बुध्यते।
नायं ब्राह्मण इत्युक्ते ज्ञायते वनिताजनः॥२१॥

जनादिशब्दभिन्नकेवलप्राणिवाचकब्राह्मणक्षत्रियादिशब्दानां शास्त्रीयस्त्रीपुंसलिङ्गता कोषे प्रतिपादितैव। किन्तु तेषां लौकिकमपि पुंस्त्वं स्त्रीत्वं वाच्यम्। तेन तेभ्यो लौकिकलिङ्गमपि स्वसजातीयशास्त्रीयलिङ्गेन सह प्रतीयते एव। एवञ्च ब्राह्मणीशब्दान्न कदाचिदपि पुरुषबोधः। तथा हि ब्राह्मणीत्यत्र स्त्रीप्रत्ययोत्पत्तये प्रकृतिभूतब्राह्मणपदार्थे

शास्त्रीयस्त्रीत्वं विवक्षणीयमेव। तथा च ब्राह्मणीशब्दात् लौकिकस्त्रीत्वस्यापि शास्त्रीयस्त्रीत्वसामानाधिकरण्येन नियमतो बोधान्नः पुरुषस्य बोधः। एवं ब्राह्मणोऽयमित्यत्र इयोऽय् पुंसोत्ययादेशाय पुंस्त्वविवक्षाया आवश्यकतया तत्सामानाधिकरण्येन लौकिकस्यापि पुंस्त्वस्य बोधान्न ततः स्त्रीव्यक्तिबोधः, ब्राह्मणादिपदार्थनिष्ठशास्त्रीयलिङ्गबोधे तदर्थनिष्ठतत्सजातीयलौकिकलिङ्गबोधोपधायकसामग्र्या व्यापकसामग्रीविषयापेक्षणीयत्वात् ॥१६--१॥

जनादयस्तु शास्त्रीयमात्रलिङ्गस्य बोधकाः ॥२२॥
अतो जनादिशब्देभ्यः पुरुषस्याथवा स्त्रियाः।
उभयस्यापि वा बोधो जा' ते योग्यतावशात् ॥२३॥
जनादिर्लौकिकं लिङ्गं प्रत्याययति नैव यत्।
अतो योषित्पुरुषयोस्तुल्यरूपं प्रवर्तते ॥२४॥

जनादिशब्दास्तु न लौकिकलिङ्गवाचकाः, अपि तु शास्त्रीयमात्रलिङ्गवाचकाः। तेन पुरुषे स्त्रियामपि तत्प्रयोगः। यथा—

"सखाजनः पश्यति कौतुकेन"।
"यत्र विद्वज्जनो नास्ति"।

अत्रेदं बोध्यम् यथा वह्निसंयोगोत्तरं दाहदर्शनात् दाहं प्रति वह्नेः कारणत्वं कल्प्यते, अतोऽत्र दाहः कुतो नेतिपर्यनुयोगस्य वह्नेरभावादिति समाधानम्, तथा ब्राह्मणोऽयमिति श्रवणानन्तरं लौकिकपुंस्त्वयुतब्राह्मणविषयकबोधरूपकार्यदर्शनात् पुरुषत्वविशिष्टब्राह्मणविषयकशाब्दबुद्धिं प्रति स्त्रीप्रत्ययासमभिव्याहृतब्राह्मणपदजन्यलौकिकपुंस्त्वोपस्थितिसहकृतब्राह्मणोपस्थितेः कारणत्वं कल्पनीयमिति तादृशकारणविरहेण न ब्राह्मणीशब्दात् पुरुषबोधः।

एवं ब्राह्मणीयमिति श्रवणोत्तरं लौकिकस्त्रीत्वयुतब्राह्मणत्वविशिष्टविषयकशाब्दबोधोत्पत्त्या तादृशबोधं प्रति स्त्रीप्रत्ययसमभिव्याहृतब्राह्मणपदजन्यलौकिकस्त्रीत्वोपस्थितिसहकृतब्राह्मणत्वावच्छिन्नोपस्थितेः कारणत्वकल्पनात् तादृशकारणविरहेण ब्राह्मणोऽयमित्यतो न योषिद्विषयको बोधः।

जनादिशब्दात्तु स्त्रीपुरुषसाधारण्येन बोधोदयात्तत्र लौकिकलिङ्गनिरूपिवशक्तेर-कल्पनात् स्त्रिया वा पुरुषस्य वोभयोर्वा बोध इति।

जनादिगणस्तु जन लोक अपत्य सन्तति सन्तान रक्षस् पतङ्ग शलभ गोधा सारिका पिपीलिका लिक्षा यूका छुच्छुन्दरीझिल्लीवाचकप्रभृतिः।

अलिङ्गसलिङ्गशब्दविभागः

शब्दास्तावद्द्विविधाः—अलिङ्गाः सलिङ्गाश्च। तत्रालिङ्गा अव्ययान्याख्यातानि च। सलिङ्गास्तु विशेष्यनिघ्नाः स्वतन्त्रलिङ्गाश्च। तत्र विशेष्यनिघ्ना एव अन्यलिङ्गा इत्युच्यन्ते 'अधीनो निघ्न आयत्त' इति कोषात् विशेष्याधीना इत्यर्थः। समानाधिकरणविशेषण-परत्वे विशेष्यवाचकबोध्यलिङ्गबोधका इति यावत्। अन्यलिङ्गशब्दोऽप्येतदर्थपर एव। विशेष्यनिघ्नास्त्रिलिङ्गा एव।

स्वतन्त्रलिङ्गास्तु एकलिङ्गा द्विलिङ्गास्त्रिलिङ्गाश्चेति त्रिविधाः। तत्रैकलिङ्गा अपि पुंस्त्रीनपुंसकमात्रलिङ्गवाचित्वेन त्रिविधाः। द्विलिङ्गा अपि स्त्रीपुंसयोः स्त्रीनपुंसकयोः पुंनपुंसकयोश्च वाचकत्वेन त्रिविधाः। तदित्थं सलिङ्गानां सप्तविधत्वम्-पुंलिङ्ग—स्त्रीलिङ्ग-नपुंसकलिङ्ग-स्त्रीपुंसलिङ्ग-स्त्रीनपुंसकलिङ्ग—पुंनपुंसकलिङ्ग—त्रिलिङ्गत्वभेदात्॥२२-२४॥

स्वतन्त्रलिङ्गविशेष्यनिघ्नयोः परिचयः

जातिशब्दद्रव्यशब्दौ लिङ्गे स्वातन्त्र्यमृच्छतः।
गुणशब्दक्रियाशब्दौ प्रायोऽन्याधीनलिङ्गकौ॥२५॥

स्वतन्त्रलिङ्गविशेष्यनिघ्नयोरवगम इत्थम्। जातिद्रव्यगुणक्रियाशब्देषु आद्यौ स्वतन्त्र-लिङ्गौ, अन्त्यौ तु प्रायेण विशेष्यनिघ्नौ वेदितव्यौ। तत्र जातिशब्दाः प्रकारतया विशेष्यतया वा जात्युपस्थापकाः। ते उभये स्वतन्त्रलिङ्गाः। तत्र प्रकारतया जात्युप-स्थापकाः घटपङ्कजवटादयः। विशेष्यतया जात्युपस्थापकाः ब्राह्मणत्वब्राह्मण्यादयः। द्रव्यशब्दा एकव्यक्तिमात्रबोधका आकाशचन्द्रादयः। तेऽपि स्वतन्त्रलिङ्गाः। गुण-शब्दा गुणप्रकारकबोधजनकाः शुक्लमृदुपाद्यो विशेष्यनिघ्नाः। प्राधान्येन गुणोपस्था-पकास्तु ते जातिशब्दा एवेति स्वतन्त्रलिङ्गा एव, 'गुणे शुक्लादयः पुंसी'त्युक्तत्वात्। एवं गुणिवाचकप्रकृतिकत्वलायन्ताः शुक्लतादयोऽपि जातिवाचका एवेति। ते स्वतन्त्रलिङ्गा एव। क्रियाशब्दाः क्रियाप्रकारकबोधजनकाः पचयाचकादयः। तेऽपि विशेष्यनिघ्नाः। विशेष्यतया क्रियोपस्थापका भवितव्यम् पाकः कृतिः इत्यादयस्तु जातिशब्दत्वान्न

विशेष्यनिघ्नाः अपि तु स्वतन्त्रलिङ्गा एव । प्राय इति कथनन्तु प्रमाणप्रधानोपाध्यायादि-शब्दानां क्रियाशब्दत्वेऽपि विशेष्यनिघ्नत्वाभावात् । यथा देवदत्तः प्रधानम् । सूर्यादेः स्वल्पपरिमाणग्रहे दूरत्वमुपाधिः । नीलः पट इत्यत्र नीलो विशेषणमिति दिक् ।

जातिवाचका अपि केचन त्रिलिङ्गाः

जातिवाचको न कश्चिदपि त्रिलिङ्गः । भाष्ये 'लिङ्गानां च न सर्वभाक्' इत्युक्ततया एकशब्दवाच्यजातेरसर्वलिङ्गत्वबोधनात् 'तटं त्रिषु' इत्यमरस्य प्रमाद इति केचिदिति नागेश आह ।

परे तु उक्तभाष्ये प्रायेणेति शेषः । अत एव विभीतकामलकादीनां बहूनां निघण्टौ त्रिलिङ्गत्वप्रतिपादनं संगच्छते । अनेककोषकृतां प्रमादकल्पनापेक्षया तद्भाष्यस्य प्रायोवादत्वस्वीकृतेर्न्याय्यत्वात् । एतदभिप्रेत्यैव नागेशेनापि इति केचिदित्युक्तमिति वदन्ति ।

लौकिकलिङ्गबोधकशब्दविभागः

शास्त्रीयलिङ्गवाचकाः सामान्येन विविच्य निगदिताः । अथेदानीं लौकिकलिङ्गवाचकाः सामान्यतो विभज्योच्यन्ते । ये खलु लक्षणरूपं लौकिकपुंस्त्वादिलिङ्गमाचक्षते, ते शब्दा द्विविधाः । केचित् प्रवृत्तिनिमित्तं पुंस्त्वादि ब्रुवते पुमादयः । पुमानयम्, इयं स्त्री, एष जनो नपुंसकम् । एषु हि लौकिकपुंस्त्वस्त्रीत्वनपुंसकत्वानि शब्दप्रवृत्तौ निमित्तानि । तदवच्छिन्ने च तत्सजातीयं शास्त्रीयमपि लिङ्गं प्रतीयते । तेन अमुना पुंसेत्यादौ शास्त्रीयपुंस्त्वादिनिबन्धननाभावादिरूपशास्त्रीयकार्यसिद्धिः ।

केचन च प्रवृत्तिनिमित्तावच्छिन्ने स्वार्थे लौकिकपुंस्त्वादि बोधयन्ति । यथा ब्राह्मणकुमार्यादयः । अमुना ब्राह्मणेन अस्याः कुमार्याः प्रतिपालनम्, इमान् शूद्रान् इमाः शूद्राश्च त्यज । एते च लौकिकपुंस्त्वादिसामानाधिकरण्येन शास्त्रीयमपि पुंस्त्वादि बोधयन्त्येव । अत एव तन्निबन्धननत्वादिरूपशास्त्रीयकार्यसंपत्तिः । एवमेते शब्दा लौकिकपुंस्त्वस्त्रीत्वयोरेव वाचकाः, न तु लौकिकनपुंसकत्वस्य । तद्धि नपुंसकक्लीबशब्दादिभिरेव प्रवृत्तिनिमित्तरूपेणोच्यते ।

सलिङ्गप्रभेदानामुदाहरणानि

अथ पूर्वमुक्ताः सलिङ्गानां प्रभेदा उदाह्रियन्ते—

(१) पुंस्त्वमात्रवाचकाः अर्थाश्रयविषयादयः । तत्प्रयोगाः-यथा घटशब्दस्य घटत्वमर्थः (वाच्यम्) । अत्रागमने सन्देशकथनमर्थः (प्रयोजनम्) । चैत्रस्य प्रभूतं

हिरण्यमयः (धनम्)। पृथ्वी लोकानामाश्रयः (आधारः)। तस्माच्छस इति नस्त्वे पुंस्त्वमाश्रयः (निमित्तम्)। दासीनां स्वामिनी आश्रयः (सेव्या)। मिथिला रमणीयो विषयः। घट इति ज्ञाने घटत्वं विषयः। ममाध्ययनं प्रवृत्तिविषयः।

(२) स्त्रीत्वमात्रवाचकाः जातिव्यक्तिसंपदादयः। घटत्वं जातिः। यस्तत्र दृष्टः सा व्यक्तिराहूयताम्। अयं महत्या संपदा युक्तः।

(३) नपुंसकमात्रलिङ्गा रक्षोधनरत्नादयः। तत्प्रयोगो यथा—आसीद्रावणो नाम महाबलिष्ठं रक्षः। गावो धनम्। गङ्गा नदीरत्नम्।

(४) स्त्रीपुंसोभयलिङ्गाः अर्गलब्राह्मणभ्रमरादयः। इदं वस्तु अर्गला अर्गलो वा। अयं ब्राह्मण इति पुंसि। स्त्रियां तु इयं ब्राह्मणी। एवं भ्रमरः भ्रमरी।

(५) स्त्रीनपुंसकलिङ्गाः पुस्तकवेतसक्रोडादयः। इह नास्ति पुस्तकी पुस्तकं वा, अन्यत्र्यक्षरकलिपियुतपत्रसमुदाय एव पुस्तकम्, अन्यस्तु न पुस्तकी, अतो न साऽध्ययनकर्म। पुस्तकं पठतीति तु पुस्तकन्यस्तलेखाभिव्यक्तमन्थपरम्। वेतसो वेतसं वा तरुः। मातुः क्रोडे क्रोडायां वा स्तनन्धयः सुखं स्वपिति।

(६) पुंनपुंसकलिङ्गाः पङ्कधर्मकार्पासादयः। गङ्गायाः पङ्कं पङ्को वाऽऽनीयताम्। धर्मं धर्मो वा सुखहेतुर्वस्तु, कार्पासं कार्पासो वा वस्त्रसाधनं पदार्थः।

(७) त्रिलिङ्गाः तटविभीतकामलकादयः। एते स्वतन्त्रलिङ्गाः। विशेष्यनिघ्ना अपि त्रिलिङ्गा एव ॥ २५ ॥

अपत्यप्रत्ययान्तानां लिङ्गविचारः

अथेयं विचारणा अपत्यप्रत्ययान्ता मानवगार्ग्यादयः किं तावत् मानवोऽयमित्यादि प्रयोगदर्शनात् मानवमस्तीत्यादि प्रयोगादर्शनाच्च स्त्रीपुंसोभयमात्रलिङ्गाः उत रक्तभवाद्यर्थकतद्धितान्तवत् त्रिलिङ्गा इति ? तत्रैव निर्णयः—

स्त्रीपुंसयोरपत्यान्ता इति कोशानुसारतः।
मानवादिपदं पुंस्त्वस्त्रीत्वयोरेव वाचकम् ॥२६॥

अमरकोशे लिङ्गसंग्रहवर्गे "स्त्रीपुंसयोरपत्यान्ताः" इत्यभिधानादपत्यप्रत्ययान्तानां स्त्रीत्वपुंस्त्वोभयमात्रलिङ्गवाचिता इति ॥२६॥

गार्ग्यै विप्रद्वयं गार्ग्यै विप्राणां वर्तते शतम् ।
एवमिष्टे प्रयोगे तु तस्य लिङ्गत्रये स्थितिः ॥२७॥

केचित्तु एतद्ब्राह्मणद्वयं मनोरपत्यमित्यर्थे एतद्ब्राह्मणद्वयं मानवमिति प्रयोगः सम्यक्, ब्राह्मणद्वयं मानवः इति प्रयोगो न समीचीनः प्रतिभातीति अपत्यप्रत्ययान्तानां भवाद्यर्थकतद्धितान्तानामिव त्रिलिङ्गता । अमरसिंहेन तु तेषां प्रायेण स्त्रीपुंसयोः प्रयोगदर्शनाद्द्विलिङ्गतोक्तेति न तद्विरोधः । किञ्चामरकोषे गण्डूषशब्दस्य स्त्रीत्वमात्रलिङ्गत्वमुपदिष्टं "लाला सिहा च गण्डूषा" इति परन्तु "कृत्वा द्वादश गण्डूषान् मुखशुद्धिर्विधीयते" इत्यादौ पुंलिङ्गोऽपि गण्डूषशब्दो दृश्यते । तस्मादमरोक्तानां लिङ्गानां प्रामाण्यं न तु तदनुक्तानामप्रामाण्यमेवेति वदन्ति ।

केवलप्राणिवाचकशब्दविभागः

चेतनमात्रवाचका द्विविधाः । केचिल्लौकिकलिङ्गं ब्रुवते केचिन्नेति लौकिकलिङ्गवाचकत्वतदवाचकत्वाभ्यां द्वैविध्यम् । तत्र लौकिकलिङ्गवाचकाः पितृ मातृ भ्रातृ दुहितृ स्वसृ जातृ जामातृ पुरुष वृष वृषभदार स्नुषा ब्राह्मण क्षत्रिय वैश्य शूद्र कुमारादयो बहवः ।

लौकिकलिङ्गाबोधकास्तु जनलोकादयः पूर्वोक्ताः । एषां पुरुषे स्त्रियां च प्रयोगेण लौकिकलिङ्गवाचकत्वाभावः ।

लौकिकलिङ्गवाचकशब्दविभागः

लौकिकलिङ्गवाचका अपि द्विविधाः । केचित् प्रवृत्तिनिमित्तं लौकिकपुंस्त्वादिलिङ्गं ब्रुवते, यथा पुमान् स्त्री नपुंसकम् । अपरे ब्राह्मणत्वादिरूपप्रवृत्तिनिमित्तविशिष्टस्वार्थे लौकिकं पुंस्त्वादि लिङ्गं बोधयन्ति । यथा ब्राह्मणः ब्राह्मणी, कुमारः कुमारी । तथा च प्रवृत्तिनिमित्तभूतलौकिकलिङ्गवाचकत्वाप्रवृत्तिनिमित्तलौकिकलिङ्गवाचकत्वाभ्यां तेषां द्वैविध्यम् ।

तत्र प्रवृत्तिनिमित्तभूतलौकिकलिङ्गवाचका पितृमातृजामातृभ्रातृदारपुरुषवृषवृषभप्रभृतयः । लिङ्गेतरप्रवृत्तिनिमित्तकत्वे सति लौकिकलिङ्गवाचकास्तु ब्राह्मणक्षत्रियवैश्यशूद्रान्त्यजबालप्रभृतयः । एते लौकिकपुंस्त्वस्त्रीत्वोभयलिङ्गवाचकाः । तत्र स्त्रियां प्रयोगे स्त्रीप्रत्ययोत्पत्त्या ब्राह्मणी क्षत्रिया वैश्या शूद्राऽन्त्यजा कुमारी बालेत्यादयः शब्दाः संपद्यन्ते ।

एवञ्च प्राणिमात्रवाचकाः सामान्यतस्त्रिविधाः। १ प्राणिमात्रवाचित्वे सति लौकिकलिङ्गवाचित्वाभावे च सति शास्त्रीयपुंस्त्वस्त्रीत्वनपुंसकत्वान्यतमवाचिनः। २ प्रवृत्तिनिमित्तभूतलौकिकपुंस्त्वस्त्रीत्वनपुंसकत्वान्यतमलिङ्गवाचित्वे सति तत्सजातीयविजातीयान्यतरशास्त्रीयलिङ्गवाचिनः। ३ लौकिकलिङ्गेतरप्राणिमात्रगतप्रवृत्तिनिमित्तकत्वे सति लौकिकपुंस्त्वस्त्रीत्वोभयवाचित्वे च सति शास्त्रीयपुंस्त्वस्त्रीत्वोभयवाचिनश्च ॥८७॥

लौकिकलिङ्गवाचिनः प्रायेण तत्सजातीयशास्त्रीयलिङ्गबोधकाः

अस्ति च यस्य प्रवृत्तिनिमित्तं लौकिकलिङ्गं लोके विदितम्।
तस्य च वाच्यं खलु शास्त्रीयं लिङ्गमपि स्यात्तज्जातीयम् ॥२८॥

ये खलु लौकिकलिङ्गप्रवृत्तिनिमित्तकाः ते प्रायेण तत्सजातीयं शास्त्रीयलिङ्गं ब्रुवते। यथा पितृशब्दो लौकिकपुंस्त्ववाची पितृत्वं हि जनकत्वविशिष्टलौकिकपुंस्त्वं स च शास्त्रीयपुंलिङ्ग एव। एवं मातृशब्दो जनकत्वविशिष्टलौकिकस्त्रीत्ववाचीति शास्त्रीयमपि स्त्रीत्वमेव वक्ति। एवं जामातृदुहितृश्वशुरभाद्यः। दारशब्दस्तु विवाहितत्वविशिष्टलौकिकस्त्रीत्ववाचित्वेऽपि शास्त्रीयपुंस्त्ववाचकः। तथा मन्त्रिवाचकप्रधानशब्दो लौकिकपुंस्त्ववाचित्वेऽपि तद्विजातीयशास्त्रीयनपुंसकत्ववाचीत्यतः प्रायेणेत्युक्तम् ॥८८॥

विशेष्यनिघ्नानां शास्त्रीयलिङ्गत्रयवाचिता

विशेष्यनिघ्नाः शास्त्रीयलिङ्गत्रितयवाचिनः।
भवन्त्येवान्यथा तेषां न हि स्यादन्यलिङ्गता ॥२९॥

विशेष्यनिघ्नानां सुन्दरादिशब्दानां शास्त्रीयलिङ्गत्रयवाचित्वमसन्दिग्धमेव। सुन्दरोऽयं कुमारः, सुन्दरीयं कुमारी, सुन्दरं वस्तु इत्यादिषु लिङ्गत्रयप्रयुक्तकार्यदर्शनात्। अत एव ते अन्यलिङ्गा विशेष्यनिघ्नाश्चोच्यन्ते ॥८९॥

विशेष्यनिघ्नानां लौकिकलिङ्गावाचित्वपक्षोपपादनम्

विशेष्यनिघ्नानां ब्राह्मणकुमारादिशब्दवत् लौकिकपुंस्त्वादिवाचित्वमभ्युपगन्तव्यं न वेति सन्देहः। तत्र मतद्वयम्—

विशेष्यनिघ्ना ये शब्दास्तेषु शक्तिर्न लौकिके।
लिङ्गे गौरवदोषेणेत्याहुः केचिद्विपश्चितः ॥३०॥

विशेष्यनिघ्नानां लौकिकलिङ्गवाचकत्वं न स्वीकार्यमिति पूर्वपक्षसाधिका युक्तयश्च अनन्तेषु विशेष्यनिघ्नेषु लौकिकलिङ्गनिरूपितशक्तीनामकल्पनेन लाघवम्। शोभना पुस्तकीत्यादौ लौकिकलिङ्गबोधासम्भवः। पवित्रा ब्राह्मणीत्यादौ विशेष्यपदेनैव लौकिकलिङ्गप्रतीतिश्च।

एवं तर्हि विशेष्यनिघ्नानां लौकिकलिङ्गवाचित्वाभावपक्ष एवास्तु। न च तथा सति, जलानयनाय कश्चिदाहूयतामिति वाक्यात् कदाचित् स्त्रीव्यक्तेरपि बोधः स्यादिति वाच्यम्, इष्टापत्तेः। अत एव—

"अकृशं कुचयोः कृशं विलग्ने विपुलं चक्षुषि विस्तृतं नितम्बे।
अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालिभागधेयम्" ॥

इत्यत्र स्त्रीप्रत्ययाभावेऽपि अकृशादिपदात्पार्वत्या बोधः। एवम्

"क्रियेत चेत्साधुविभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया।
या स्वौजसां साधयितुं विलासैस्तावत् क्षमा नामपदं बहु स्यात्" ॥

अत्र स्त्रीप्रत्ययान्तेभ्योऽपि प्रथमाक्षमादिपदेभ्यः पुरुषस्य नलस्य प्रतीतिः।
न च विशेष्यनिघ्नानां लौकिकपुंस्त्वाद्यवाचित्वे

"अधरकिसलये कान्तदन्तक्षते हरिणशिशुदृशां नृत्यति भ्रूयुगम्।
भुवमुचितमिदं यद्विपत्तौ सतामतिकुटिलगतेः स्यान्महानुत्सवः" ॥

इत्यत्र कान्तपदेन पुरुषस्य कथमवगतिरिति वाच्यम्? तात्पर्यवशाद्योग्यतावशाच्च पुरुषबोधात्, तत्रैव हरिणशिशुदृक्पदेन नारीबोधवत्। तस्मान्मा भूद्विशेष्यनिघ्नानां लौकिकलिङ्गवाचित्वमिति वदन्ति ॥३०॥

विशेष्यनिघ्नानां लौकिकलिङ्गवाचित्वपक्षसमर्थनम्

परे त्वाहुर्विशेष्याच्चलिङ्गानामपि लौकिकम्।
लिङ्गमर्थोऽभ्युपेतव्यः कुमारब्राह्मणादिवत् ॥३१॥

परे तु प्राणिवाचिनां ब्राह्मणकुमारादीनां यथा लौकिकेऽपि लिङ्गे शक्तिस्तथा चेतनाचेतनसाधारणसुन्दरत्वाद्यवच्छिन्नवाचिविशेष्यनिघ्नानामपीति सुन्दरः कश्चिदानीयतामित्यतः पुरुषस्यैव, सुन्दर्यानीयतामित्यतश्च नार्या एव बोधः। विपरीतबोधेष्टापत्तिस्तु न, अनुभवविरोधात्।

न च विशेष्यनिघ्नानां विशेषणत्वेनैव स्वार्थबोधकतया सुन्दर आनीयतामित्यत्र विशेष्यवाचकपदाध्याहारस्यावश्यकत्वेन नार्यादिपदाध्याहारे स्त्रीप्रत्ययमन्तरेणासाधुत्वापत्त्या पुरुष इत्यादेरेवाध्याहारेण भवितव्यमिति न ततः स्त्रिया बोध इति वाच्यम्, सर्वत्राध्याहारे मानाभावात्।

किञ्च श्रयमधमपुत्र इत्यत्र विशेष्यवाचकपदाध्याहारासंभवेन विशेष्यनिघ्नानां समानाधिकरणविशेषणत्वेनैवार्थबोधकत्वमिति नियमासिद्धेः, मूर्खपुत्रो मूर्ख एवेत्यादौ स्त्रिया अपि बोधप्रसङ्गाच्च। ननु लौकिकलिङ्गस्यापि वाचकतया लौकिकपुंस्त्वस्त्रीत्वयोरुपस्थितौ पुरुषविषयकतात्पर्यवशात् स्त्रीप्रत्ययाभावघटितशाब्दसामग्र्या पुरुषबोधः सूपपादः। विशेष्यनिघ्नत्वव्यवहारस्तु समानाधिकरणविशेषणपरत्वे तथात्वमित्येतावताप्युपपद्यते।

न च विशेष्यनिघ्नानां लौकिकलिङ्गस्यापि बोधकत्वे सुन्दरो घट आनीयतामित्यत्र बोधाभावप्रसङ्गः,घटे लौकिकलिङ्गाभावादिति वाच्यम्, यत्र हि लौकिकलिङ्गसंभवस्तत्रैव तत्प्रवृत्तेः। तथा हि न सुन्दरादिशब्दानां लौकिकलिङ्गविशिष्टशास्त्रीयलिङ्गे शक्तिः विनिगमनाविरहेण शास्त्रीयलिङ्गविशिष्टलौकिकलिङ्गेऽपि शक्तेः कल्पनीयतया गौरवात्, अपि तु लौकिके शास्त्रीये च लिङ्गे खण्डशः शक्तिः। तथा सति योग्यतातात्पर्यवशात् समभिव्याहारविशेषमहिम्ना च क्वचिदुभयोर्लिङ्गयोः प्रत्ययः क्वचिच्छास्त्रीयमात्रस्येत्यदोषादित्याहुः ॥३१॥

लिङ्गद्वयस्य क्वचिदविवक्षापि

लिङ्गाविवक्षया क्वापि शूद्रप्रभृतिशब्दतः।
योषित्पुरुषयोर्बोधः साधारण्येन जायते ॥३२॥

ये तावदनियतलिङ्गाः प्राणिषु प्रयोगयोग्याः शूद्रब्राह्मणादयः तद्वाच्यलौकिकलिङ्गस्य कुत्रचिदविवक्षापि भवति। तेन 'परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्' इत्यत्र शूद्रवाच्यलौकिकपुंस्त्वस्त्रीत्वयोरविवक्षितत्वात् शूद्रत्वेन स्त्रीपुरुषसाधारणधर्मेण स्त्रीपुरुषयोरुभयोर्बोधः। एवं 'ब्राह्मणो न हन्तव्य' इत्यादौ लिङ्गाविवक्षयोभयोः प्रतीतिर्जायते।

ये पुनः प्राणिषु प्रयोगयोग्या अपि नियतलिङ्गाः सन्ति गन्धमुखगोधादयः तेषां लौकिकं लिङ्गं वाच्यमेव नास्ति अपि तु शास्त्रीयमेव। अतो गन्धमुखीगोधाशलभादिशब्देभ्यः स्त्रीपुरुषसाधारण्ये न बोधो नियत एव ॥३३॥

शूद्राप्रभृतिशब्देषु न लिङ्गस्याविवक्षणम् ।
अतस्तेभ्यो नियमतः स्त्रीमात्रविषयैव धीः ॥३३॥

अथ यदा शूद्रप्रभृतिशब्देषु शास्त्रीयस्त्रीत्वं विवक्ष्यते तदा तेभ्यः स्त्रीप्रत्ययस्य टाबादेरुत्पत्त्या शूद्राब्राह्मणीत्याद्याः शब्दाः भवन्ति । तेभ्यश्च नियमेन स्त्रीव्यक्तय एव प्रतीयन्ते न पुरुषाः । कुत एतदिति चेत् ? यतो विशेष्यनिघ्नभिन्नेषु लौकिकलिङ्गवाचकेषु उदीरितेषु शास्त्रीयलिङ्गसामानाधिकरण्येन तत्सजातीयं लौकिकलिङ्गमपि प्रतीयत एवेति नियमो जागर्त्ति । तस्मात् शूद्राप्रभृतिशब्देषु लौकिकमपि स्त्रीत्वं विवक्षणीयमेव भवति । तेन शूद्राब्राह्मणीत्यादितः स्त्रिया एव बोधो जायते न पुरुषस्य । विशेष्यनिघ्नानान्तु विशेष्याधीनलिङ्गसमर्पकत्वात् स्त्रीप्रत्ययान्तत्वेऽपि सति तात्पर्ये लौकिकपुंस्त्वविशिष्टबोधकत्वमपि भवति । यथा "व्यक्तिस्तदा सा प्रथमाभिधेया" इत्यत्र स्त्रीप्रत्ययान्तप्रथमाशब्देन नलस्य प्रतीतिः ।

अथैवं लौकिकलिङ्गस्याविवक्षायां रन्धनाय पाचको नियुज्यतामिति वाक्यान्नार्या अपि बोधापत्तिरिति चेत्—प्रकरणादितो विवक्षाविरहनिर्णये इष्टापत्तिः ।

अत एव तत्रभवः, तत्रजातः, इत्यादिसूत्रेषु व्याख्यानतो लिङ्गसंख्ययोरविवक्षितत्वनिर्णयेन तदनवच्छिन्नस्यैव तद्धितवाच्यतया माथुरिकी माथुरिकावित्यादिसिद्धिः पुंस्त्वैकत्वयोर्विवक्षितत्वे तु माथुरिक इत्येव स्यात् ।

ननु "सूत्रे लिङ्गवचनमतन्त्र" मिति परिभाषया सूत्रेष्वेव तदविवक्षा, तत्र तथा सत्यपि आर्षत्वेन साधुत्वस्य वक्तुं शक्यत्वात् । अन्यथा 'तस्यापत्य'मित्यादावमादेशाभावप्रसङ्गात् इति चेत्—नैवम् । ब्राह्मणो न हन्तव्यः, चाण्डालस्य गृहे न शयनीयमित्यादौ व्यावहारिकवाक्येऽपि लिङ्गसङ्ख्ययोरविवक्षादर्शनात् । अत एव ब्राह्मण्या अपि हननमनेकब्राह्मणस्यापि च हननं प्रतिषिद्धमवगम्यते । एवं चाण्डाल्या गृहेऽनेकचाण्डालस्वामिकगृहे च स्वापनिषेधो लभ्यते ।

अपि च शास्त्रकारस्यापि संमतं लौकिकप्रयोगेऽपि कदाचित् लिङ्गस्याविवक्षापीति । तथा हि शूद्रशब्दस्य जात्यन्तरनिवृत्तिपरत्वे पूर्वं स्त्रीत्वाविवक्षणे तस्य महच्छब्देन समासे महाशूद्रः । ततः स्त्रीत्वविवक्षायां जातिवाची यः शूद्रशब्दस्तदन्तप्रातिपदिकं स्त्रियां टापं लभते, जातिवाचिमहत्पूर्वन्तु नेत्यर्थकेन 'शूद्रा चामहत्पूर्वे' त्यजातिगणसूत्रेण टापि महाशूद्रा । तत्र निषेधाभावाय 'अमहत्पूर्वे' त्यंशोऽपि जातिरित्यस्य सम्बन्धः । तथा च तत्र शूद्रशब्दस्य जातिवाचित्वेऽपि महत्पूर्वस्य महाशूद्रेतिसमुदायस्य उत्कृष्टशूद्रबोधकतया

जातिवाचित्वाभावादुक्तनिषेधाप्रवृत्त्या टाप्सिद्धिरिति महाभाष्ये उक्तम्। अनेन च लोकेऽपि लिङ्गाविवक्षा भवतीति स्पष्टमेव लभ्यते।

अपि च लिङ्गाविवक्षया 'कुक्कुटाण्डं मृगक्षीर' मित्यादेः सिद्धिमाश्रित्य कुक्कुट्यण्डं मृगीक्षीरमित्यादीनामनभिधानमित्याशयेन 'कुक्कुट्यादीनामण्डादिषु' इति पुंवद्भावविधायकवार्त्तिकस्य महाभाष्यकृता प्रत्याख्यानं कृतमित्यतोऽपि निश्चीयते सूत्रे इवान्यत्रापि भवति लिङ्गस्याविवक्षेत्यलम्।

इदन्तु बोध्यम् 'अर्थात् प्रकरणाद्वा विशेषावगति' रिति न्यायेन यदा भारवहनादिपुरुषसाध्यं प्रयोजनं प्रकृतो वा दासो भवति तदा शूद्रमाह्वयेत्यतः पुमानेवाह्वानकर्मतया प्रतीयते न तु स्त्री।

स्त्रिया नारीबोधाभिप्राये सति स्फुटप्रतिपत्तये शूद्रामाह्वयेत्येव वाच्यम्, शूद्राशब्दो हि प्रकरणादिकमनपेक्ष्यैव नारीं बोधयितुमीष्टे, शूद्रन्तु तदपेक्ष्येति नारीबोधाय शूद्राशब्द एव प्रयोक्तुमुचितः। तमनुक्त्वा प्रयुक्तः शूद्रशब्दः पुमांसमेवावगमयति।

यत्र पुनरर्थः प्रकरणं च स्त्रीपुरुषसाधारणं तत्र लिङ्गस्याविवक्षया प्रयुक्तः शूद्रशब्दो लौकिकलिङ्गानवच्छिन्नविषयकं बोधं जनयति। यथा शूद्रसन्निधौ वेदो नाध्येतव्यः, शूद्रो मासेन शुद्ध्यति।

एवञ्च शूद्राशब्दात् स्त्रीजनस्य बोधः सार्वत्रिकः। शूद्रशब्दात् पुरुषबोधो बाहुल्यिकः। लौकिकलिङ्गाविषयकबोधस्तु क्वाचित्क इति ॥३३॥

निन्यस्त्रीलिङ्गे तु न लिङ्गाविवक्षा

ननु यथा स्त्रीत्वाविवक्षया कुक्कुटाण्डमित्यादौ कुक्कुटादिशब्दात् स्त्रीप्रत्ययाभावः तथा खट्वा गङ्गा तारा इत्यादौ खट्वगङ्गतारूपप्रातिपदिकात् स्त्रीत्वाविवक्षणे स्त्रीप्रत्ययानुत्पत्त्या खट्वस्तारो गङ्ग इत्यादेरपि साधुत्वापत्तिरिति नैष दोषः।

स्त्रीप्रत्ययप्रकृतयः काश्चित् स्त्रीमात्रलिङ्गिकाः।
अनेकलिङ्गाः काश्चिच्चेत्येवं द्वैविध्यमाश्रिताः ॥३४॥
तत्राद्यासु स्त्रीत्वलिङ्गविवक्षा नियतान्यथा।
न ताः साधुत्वमृच्छेयुर्न च स्युः स्वार्थबोधिकाः ॥३५॥

स्त्रीप्रत्ययप्रकृतिभूतप्रातिपदिकानि द्विविधानि स्त्रीत्वमात्रवाचकानि, स्त्रीत्ववाचित्वे सति तदितरलिङ्गबाधकानि च। तत्राद्येषु खट्वगङ्गतारगोधप्रभृतिषु स्त्रीत्वविवक्षा

नित्या, अर्थात् स्त्रीत्वविवक्षयैव प्रयुक्तेषु साधुत्वमन्यथा त्वसाधुत्वमिति। द्वितीयेषु कोमलकुमारक्रोडप्रभृतिषु त्वनित्या सा, अर्थात् स्त्रीत्वविवक्षया वा तदविवक्षया वा प्रयुक्तेषु साधुत्वमिति। तत्र स्त्रीत्वे विवक्षिते स्त्रीप्रत्ययोऽन्यथा तु नेति विवेकः।

एतदुक्तं भवति यस्य हि शब्दस्य यदर्थविवक्षापूर्वकशास्त्रीयकार्ये सत्येव लोके प्रयोगो दृश्यते स तदर्थविवक्षापूर्वकशास्त्रीयकार्यसंस्कृत एव साधुत्वात् प्रयोक्तव्यः, प्रयुक्तानामिदमन्वाख्यानमिति व्याकरणाभियुक्तैरुक्तत्वात्। तथा च खट्वप्रभृतिषु स्त्रीत्वविवक्षा आवश्यकी अन्यथा ह्यसाधुत्वमर्थाप्रत्यायकत्वं च स्यात्।

अत एव धात्वर्थमात्रविवक्षया कर्तृकर्मकालाद्यविवक्षणेन लकाराद्यभावे पच् पठ् इत्यादेर्न साधुत्वम्। अन्यथा परश्चेति शास्त्रेण प्रत्ययः परो भवत्येवेति नियमेऽपि तत्तदर्थाविवक्षायां प्रत्ययविधीनां प्राप्तेरेवाभावात् पच् इत्यादेः साधुत्वमपरिहार्यमेव स्यात्।

न च धात्वर्थमात्रविवक्षायामपि धात्वर्थरूपभावे घञादेः प्राप्तया पाक इत्यादय एव प्रयोगा न तु पचित्यादय इति वाच्यम्, सिद्धावस्थापन्ने एव धात्वर्थे घञादेर्विधानेन सिद्धत्वेनाविवक्षणे तस्याप्राप्तेः। ब्राह्मणशूद्रादिशब्दानान्तु लिङ्गप्रयुक्तकार्यरहितानामपि लोके प्रयोगसत्त्वात् कदाचित् लिङ्गस्याविवक्षाऽपि।

लिङ्गाविवक्षायां तस्यापत्यमित्यमादेशोपपादनम्

ननु यथा मृगक्षीरमित्यादौ स्त्रीत्वाविवक्षायां स्त्रीप्रत्ययाभावः तथा नपुंसकत्वस्याविवक्षितत्वे तस्यापत्यमित्यत्रामादेशेन न भवितव्यम्।

अत्र केचित् आर्षत्वाच्छन्दोवत् सूत्राणि भवन्तीति भाष्याच्च तत्रामादेश इति वदन्ति।

अन्ये तु अतोऽमित्यस्य नपुंसकत्वबोधकात्स्वमोरमिति नार्थः, अपि तु नपुंसकत्वशक्तात् इति। तथा च तस्यापत्यमित्यत्र तात्पर्याभावेन नपुंसकत्वस्य बोधाभावेऽपि तन्निरूपितशक्तेः सद्भावादमादेशसिद्धिः। न चैवं जातादिपदस्य त्रिलिङ्गतया तत्र जातः, तत्र भव इत्यादावप्यमापत्तिरिति वाच्यम्, शाब्दिकानां मतेऽर्थभेदेन शब्दभेदाङ्गीकाराज्जातभवादिशब्दस्य तत्तलिङ्गरूपार्थभेदेन भिन्नतया तत्र जात इत्यादौ पुंलिङ्गस्यैव जातादिशब्दस्योपादानेन तस्य च नपुंसकत्वशक्तत्वाभावेनामादेशाप्रसक्तेरित्याहुः।

नव्यास्तु अर्थभेदेन शब्दभेदानुपगमेऽपि न क्षतिः। तथा हि तस्यापत्यमित्यादा-

चपत्यादिपदादपत्यादिविशेषणतया नपुंसकत्वं भासत एवेति नामादेशानुपपत्तिः। परन्तु अपत्यप्रत्ययवाच्यतया तन्न विवक्षितम्। यथा जलं घनरसपदवाच्यमित्यत्र जलविशेषणतया भासमानमपि नपुंसकत्वं घनरसपदवाच्यत्वेन न विवक्षितं तद्वत्। तथा च तत्सम्बन्ध्यपत्यमित्यर्थेऽणादिरिति पर्यवसितार्थकवाक्ये इतिनापत्यत्वावच्छिन्न एव परामृश्यते, न तु नपुंसकत्वविशिष्टमपत्यम् न वा तत्पदार्थं उपग्वादि तस्योपग्वादिशब्दलभ्यत्वात्। नापि तत्सम्बन्ध तस्य उपग्वपत्यमित्यादावविवेकार्थीभानमहिम्नैव लाभात्। एवञ्चोपग्वादिरुपलक्षणं न तु विशेषणमिति तत्त्वम्। एवमेकत्वमप्यणादिप्रत्ययवाच्यत्वेनाविवक्षितम्। तेन औपगवी इत्यादयोऽपि सिद्ध्यन्ति। लिङ्गसंख्ययोः शक्तिग्रहस्तु वृक्षादिवल्लोकत एवेत्याहुः ॥३४–३५॥

ब्राह्मणादिशब्दानां शास्त्रीयलिङ्गवाचकत्वमतखण्डनम्

ननु ब्राह्मणकुमारादिशब्दानां लौकिकमेव लिङ्गं वाच्यमस्तु, माऽस्तु शास्त्रीयं लिङ्गमर्थः। शास्त्रीयकार्येषु च शास्त्रीयलौकिकोभयलिङ्गं यथासम्भवं निमित्तमाश्रीयताम्, तन्त्रेणोभयलिङ्गग्रहणस्य कर्तुं शक्यत्वात्। तथा च खट्वेत्यादौ शास्त्रीयं स्त्रीत्वमाश्रित्य स्त्रीप्रत्ययः ब्राह्मणीत्यादौ तु लौकिकम्। एवं घटानित्यादौ शास्त्रीयं, ब्राह्मणानित्यादौ च लौकिकं पुंस्त्वमाश्रित्य नत्वम्। नपुंसकत्वं तु शास्त्रेषु सर्वत्र शास्त्रीयमेव। एवञ्च ब्राह्मणादीनां शास्त्रीयपुंस्त्वनिरूपितशक्तेरकल्पनेन महल्लाघवमिति चेत्—न।

ब्राह्मणक्षत्रियादीनां प्राणिमात्राभिधायिनाम्।
पुंस्त्वादि लिङ्गं शास्त्रीयं वाच्यं यदि न मन्यते ॥३६॥
तदाऽस्मिन् ब्राह्मणग्रामे पुरुषानथ च स्त्रियः।
ब्राह्मणान् विद्धि वाक्येऽस्मिन्न स्यान्नत्वस्य साधुता ॥३७॥

ब्राह्मणादिशब्दानां हि शास्त्रीयलिङ्गावाचकत्वे स्त्रीपुरुषोभयपरत्वेन प्रयुक्ते "एतस्मिन् ग्रामे वासिनः सर्वान् स्त्रियः पुरुषांश्च ब्राह्मणानवेही"ति वाक्ये नत्वानापत्तिः। यदि अत्र ब्राह्मणपदवाच्यं लौकिकं पुंस्त्वं न विवक्ष्यते तदा पुंस्त्वबोधकत्वाभावेन नत्वाप्राप्तेः। अथ विवक्ष्यते तदापि तद्ग्रामवासिस्त्रीगणेषु तदसत्त्वान्नत्वाप्राप्तिरेव ब्राह्मणपदबोध्यत्वेन विवक्षितयावदर्थेषु पुंस्त्वाभावात्।

किञ्च एतद्ग्रामवास्यभिन्नसर्वपदार्थाभेदान्वयस्य लौकिकपुंस्त्वेन विशेषितब्राह्मणपदार्थेषु बाधितत्वेन सर्वान् ब्राह्मणानवेहीति वाक्यजबोधस्याप्रामाण्यापत्तिः।

यथा हि पीतेष्वपि सत्सु घटेषु अत्र सर्वे घटा नीला इति बोधस्याप्रामाण्यं तद्वत्। मम तु लौकिकलिङ्गाविवक्षणात्, विवक्षणाच्च शास्त्रीयपुंस्त्वस्य, तस्य च केवलान्वयित्वेन स्त्रीष्वपि सत्त्वात् एतद्ग्रामस्थान् सर्वान् ब्राह्मणानवेहीति वाक्ये पुंसीति नत्वमुपपद्यते, शास्त्रीयकार्यमात्रे शास्त्रीयस्यैव लिङ्गस्य निमित्तत्वोपगमात्।

न चैतद्रीत्या स्त्रीपुरुषोभयतात्पर्येण इमा ब्राह्मण्य इत्यपि प्रयोगः स्यात् लौकिकस्त्रीत्वस्याविवक्षणात् शास्त्रीयस्त्रीत्वविवक्षणाच्च तस्य च पुंस्वपि सत्त्वादिति वाच्यम्, शब्दस्वभाववैचित्र्यात् स्त्रीप्रत्ययसमभिव्याहृतब्राह्मणादिशब्दान्नियमतः स्त्रीव्यक्तिमात्रबोधात्।

एवं त्वन्मते पुमान् स्त्रियेत्येकशेषे ब्राह्मणान् पश्येत्यत्र नत्वानुपपत्तिः, ब्राह्मणीषु लौकिकपुंस्त्वाभावात्। मम तु तत्र पुंवाचकस्य शेषे तद्बोध्यशास्त्रीयपुंस्त्वस्य ब्राह्मणीष्वपि सत्त्वेन नत्वमुपपन्नं भवति।

अथ ब्राह्मण्यादिशब्दात् पुरुषबोधापत्तिवारणाय लौकिकलिङ्गवाचकात् शास्त्रीयपुंस्त्वादिबोधे तत्सामानाधिकरण्येन लौकिकस्यापि पुंस्त्वादेर्बोधो भवत्येवेति नियमस्य तदनुसारिकार्यकारणभावस्य च स्वीकरणीयतया ब्राह्मणान् पश्येत्यत्र शास्त्रीयपुंस्त्वबोधे लौकिकस्यापि पुंस्त्वस्य भानावश्यकतया पुमान् स्त्रियेत्येकशेषसिद्धात् ब्राह्मणादिशब्दात् स्त्रीपुरुषोभयबोधानुपपत्तिस्तदवस्थेति चेत्—न, पुमान् स्त्रियेत्यादिशेषाविषयेष्वेव तथा नियमोपगमात्।

एवं शास्त्रीयलिङ्गस्य वाच्यत्वादेव "ग्राम्यपशुसंघेष्वतरुणेषु स्त्री" तिशास्त्रविहितैकशेषविषये गाव इमा इत्यादौ शास्त्रीयस्त्रीत्ववैशिष्ट्येन वृषभाणामपि बोध उपपद्यते। तत्र लौकिकलिङ्गाभानात् शास्त्रीयस्त्रीत्वस्य च वृषभेष्वपि सद्भावात्।

तथा च पुमान् स्त्रियेत्यादेकशेषशास्त्रेण द्वयं लभ्यते ब्राह्मणीब्राह्मणावित्यादिप्रयोगाणामसाधुत्वं तदर्थेऽपि ब्राह्मणावित्यादिप्रयोगाणां साधुत्वं च। अतश्च पुमान् स्त्रियेत्येकशेषसिद्धात् ब्राह्मणशब्दात् शास्त्रीयपुंस्त्वविशिष्टलौकिकपुंस्त्ववत्सहितलौकिकस्त्रीत्ववद्द्विबहुलब्राह्मणबोधः, सरूपाणामित्यनुशिष्टब्राह्मणशब्दाच्च शास्त्रीयपुंस्त्वसहितलौकिकपुंस्त्वविशिष्टद्विबहुलब्राह्मणविषयको बोधः। तादृशब्राह्मणीशब्दात् शास्त्रीयस्त्रीत्वसहितलौकिकस्त्रीत्वविशिष्टद्विबहुलब्राह्मणविषयकः। अत एवैकशेषसिद्धानां द्विवचनान्तता बहुवचनान्तता वा। तदसिद्धानां ब्राह्मणप्रभृतिशब्दानां प्रायेणैकपुंब्राह्मणबोधकत्वमेकवचनान्तत्वं च। एवं तथाभूतब्राह्मण्यादिशब्दानामप्येकब्राह्मणीबोधकत्वमेकवचनान्तत्वं च। एतेन ब्राह्मणादेः—

### ब्राह्मणादिशब्दानां त्रैविध्यम्

(१) शास्त्रीयपुंस्त्वविशिष्टं यत् द्वयं बहु वा लौकिकपुंस्त्वविशिष्टसहितलौकिकस्त्रीत्व-विशिष्टं ब्राह्मणत्वावच्छिन्नं तद्बोधकत्वम् ।

(२) शास्त्रीयलौकिकोभयविधपुंस्त्वविशिष्टैकद्विबहुलब्राह्मणत्वावच्छिन्नबोधकत्वम् ।

(३) शास्त्रीयलौकिकस्त्रीत्वविशिष्टैकद्विबहुलब्राह्मणबोधकत्वं चेति ।

तत्राद्येऽनेकव्यक्तिबोधकतया द्विवचनबहुवचने एव । द्वितीये त्वेकवचनमपि। एवं तृतीयेऽपि । किन्तु तस्य शास्त्रीयस्त्रीत्वबोधकतया ततः स्त्रीप्रत्ययोत्पत्त्या ब्राह्मणीत्या-दिकं साधु ।

एकशेषप्रत्याख्याने तु ब्राह्मणब्राह्मणौ ब्राह्मणीब्राह्मणावित्यादीनामनभिधानान्न प्रयोगः । द्विवचनबहुवचनसमभिव्याहारे ब्राह्मणादिशब्दस्य केवलशास्त्रीयपुंस्त्वलिङ्ग-बोधकत्वेऽपि साधुत्वोपगमेन ब्राह्मणौ ब्राह्मणा इत्यादितः क्वचित् पुरुषमात्रविषयको-बोधः क्वचित् स्त्रीपुंसोभयविषयकः । अत्रैव सरूपाणाम्, पुमान् स्त्रिया इति शास्त्र-तात्पर्यम् ।

एवं वृषभधेन्वाद्युभयपरत्वेन गाव इमा इत्यादय एव प्रयोगा न तु गाव इमे इत्या-दयः । तत्र हि 'ग्राम्यपशुसंघेष्वतरुणेषु स्त्री' इति सूत्रेण स्त्रीवाचक एव शिष्यते । अतो गोशब्दस्य शास्त्रीयस्त्रीत्वविशिष्टं यत् लौकिकपुंस्त्वविशिष्टसहितलौकिकस्त्रीत्वविशिष्टं गोत्वावच्छिन्नं तद्बोधकत्वमित्यादि पूर्ववद्बोध्यमित्यलम् ॥३६-३७॥

### शास्त्रीयलिङ्गानां शब्दवाच्यत्वे युक्तयः

अभेदकत्वात् सर्वत्र भावादनुभवात्ययात् ।
शास्त्रीयलिङ्गवाचित्वं ध्रुवंव परिलक्ष्यते ॥३८॥
तथापि लिङ्गशास्त्राणां प्रामाण्याद्व्यवहारतः ।
शब्दशास्त्रीयकार्याणामन्यथाऽनुपपत्तितः ॥३९॥
अधिकस्य च लिङ्गस्यावगमे प्रथमाविधेः ।
लिङ्गानां शब्दवाच्यत्वं शास्त्रीयाणामपीष्यते ॥४०॥

शास्त्रीयलिङ्गस्य केवलान्वयित्वेनाव्यावर्तकत्वेऽप्यनुभवागोचरत्वेऽपि च शब्दवा-च्यत्वं स्वीक्रियते । कुतः लिङ्गानुशासनानां घञजपः पुंसि, स्त्रियां क्तिन्, नपुंसकं भावे क्त इत्यादीनामसत्युपपत्तौ पुमान् पाणिन्यादीनाञ्च प्रामाण्यात्, घटशब्दः पुंलिङ्ग इत्यादिव्य-

व्यवहारात्, चेतनाचेतनसाधारणपुंस्त्वादिलिङ्गानभ्युपगमे घटानित्यादौ तस्माच्छसो नः पुंसीत्यादिना नत्वादिरूपकार्याणामनुपपत्ते. प्रातिपदिकार्थलिङ्गेति शास्त्रेण प्रातिपदिकार्थापेक्षया लिङ्गेऽधिके भासमाने ,प्रथमाविधानाच्च ॥३९-४०॥

### त्रिलिङ्गशब्दानां विभाग प्रयोगव्यवस्था च

त्रिलिङ्गाः शब्दा द्विविधा । विशेष्यनिघ्नाः स्वतन्त्रलिङ्गाश्चेति प्रागुक्तमेव । तत्र य स्ववाच्यलिङ्गत्रयं विशेष्यबोधकशब्दबोध्यलिङ्गमनपेक्ष्यैव पर्यायेण बोधयन्ति ते स्वतन्त्रलिङ्गाः स्वाधीनलिङ्गा वा उच्यन्ताम् । यथा दाडिमतटविभीतकादय. । ते च स्वल्पत्वात् परिगणयितु शक्याः । ये पुनस्त्रिलिङ्गा विशेष्यवाचकशब्दप्रयोगे सति तच्छब्दबोधितमेव लिङ्गं बोधयन्ति तदप्रयोगे च नपुसकत्व पुंस्त्वं वा प्रत्याययन्ति ते विशेष्यनिघ्ना अन्यलिङ्गाश्चोच्यन्ते । तत्र स्वतन्त्रत्रिलिङ्गाना तत्तल्लिङ्गे यदृच्छया प्रयोगा । यथा-

दाडिम. फलम्, दाडिमी फलम्, दाडिमं फलम् । जलसमीपदेशविशेषस्तट, तटी तटं वा । विभीतको विभीतकी विभीतकं वा फलम् ।

### विशेष्यनिघ्नानां प्रयोगवैचित्र्यम्

विशेष्यनिघ्नशब्दानां वैचित्र्यमिदमीर्यताम् ॥४१॥

ते समानाधिकरणविशेषणसमर्पकाः ।

विशेष्याधीनवचनलिङ्गाः प्रोक्ता मनीषिभिः ॥४२॥

विशेष्यनिघ्नानां प्रयोगेषु बहु वैचित्र्यमस्ति । तदस्माभि. प्रदर्श्यते । तच्च नियतमेव । तथा हि तेषाम्-

(१) नामार्थसमानाधिकरणविशेषणपरत्वे विशेष्यवाचकशब्दबोधिते एव लिङ्गे तद्बोधितवचने एव च प्रयोगो यथा—नीलः पटस्त्यज्यताम्, श्वेतां शाटीं परिधेहि, कोमलं वसनमानीयताम् ॥-१-४२॥

असमानाधिकरणविशेषणपरास्तु ते.

पुंव्यक्तिबोधतात्पर्यसत्त्वे पुंलिङ्गभागिनः ।

स्त्रीव्यक्तिबोधतात्पर्ये सति स्त्रीलिङ्गयोगिनः ॥४३॥

(२) विशेष्यनिघ्नानां व्यधिकरणविशेषणपरत्वे तु यदि पुरुषबोधे तात्पर्यं तदा पुंस्त्वे

प्रयोगः। यदि च स्त्रीबोधे तात्पर्यं तदा स्त्रीत्वे। यथा—अधमात्मात्रेऽयं नीचतरभावः, अयं ज्येष्ठायाः पुत्रः, अयं तु कनिष्ठापुत्रः ॥४३॥

प्राप्तेषु त्रिषु लिङ्गेषु क्लीबलिङ्गा भवन्ति ते।
पुंलिङ्गास्तु प्रयुज्यन्ते यदि स्युः प्राणिबोधकाः ॥४४॥

(३) यस्य च विशेष्यनिघ्नस्य पुंस्त्वे स्त्रीत्वे नपुंसकत्वे वा प्रयोगे कृते न विवक्षितार्थहानिः तस्येच्छया त्रिष्वपि लिङ्गेषु प्रयोगः प्राप्तः परन्तु स क्लीबे एव प्रयोक्तव्यः। यथा—सर्वैरिष्टं साध्यते। इदन्तु बोध्यम्।

"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि॥"

अत्राद्ये इष्टशब्दस्य त्रिलिङ्गत्वात् इष्टः इष्टा इष्टमिति त्रिविधेऽपि प्रयोगे कृते यद्यपि विवक्षितार्थहानिर्न भवति, तथापि इष्टं साध्यते इत्येव प्रयोगः। द्वितीयेऽपि बोध्यं बोध्या बोध्यः इति त्रिविधोऽपि वक्तुं शक्यः, परन्तु बोध्यमिति नपुंसके एव प्रयोक्तव्यः। एवं तृतीये किञ्चनेति नपुंसक एव प्रयोगो न पुमादौ।

(४) यदि तु जातादयो लिङ्गत्रयशालाः स्त्रीपुरुषोभयपरत्वेन प्रयोक्तुमिष्यन्ते तदा ते पुंलिङ्गा एव प्रयुज्यन्ते, यथा—"स जातो येन जातेन याति वंशः समुन्नतिम्" ॥४४

ते क्लीबलिङ्गा धात्वर्थे विशेषणपरा यदि ॥४५॥

(५) यदि विशेष्यनिघ्नाः धात्वर्थे समानाधिकरणविशेषणपराः तदा ते क्लीबलिङ्गा भवन्ति। यथा—स्तोकं पचति, सोल्लासं ब्रवीति।

अत्रेदं बोध्यम् भावार्थककृदन्तयोगे अभेदेन विशेषणपराः क्लीबे पुंसि च प्रयोक्तुं शक्यन्ते। स्तोकं पाकः स्तोकः पाक इति। तथा हि साध्यावस्थापन्नधात्वर्थविशेषणपरत्वे नपुंसके प्रयोगः सिद्धावस्थापन्नघञाद्यर्थविशेषणपरत्वे पुंसि। एतत्प्रयोगद्वयञ्च नैयायिका अपि स्वीकुर्वन्ति, किन्तु मन्यते केवला घञादयोऽनर्थकाः घञाद्यन्ता अपि क्रियावाचिनः। तत्र यदा धात्वर्थे विशेषपरता तदा नपुंसके प्रयोगः, यदा पुनर्घञाद्यन्तनामार्थे विशेषपरता तदा पुंसि प्रयोग इति विशेषः ॥४५॥

विशेष्यवाचकपदमलिङ्गं यदि वर्तते ।
तदा विशेष्यनिष्ठानां प्रयोगः क्लीबलिङ्गकः ॥४६॥

( ६ ) यदि च विशेष्यवाचकपदं लिङ्गवाचकं न, यथा अव्ययधात्वादि, तदा समानाधिकरणविशेषणपराणां क्लीबलिङ्गक एव प्रयोगः । यथा—

"न बुध्यते इत्यपि बुद्धिसाध्यम्" ।

कुटिलग्रीवं वीक्षते । मृदु पचति ।

अत्र बुद्धिसाध्यमित्यस्य विशेष्यम् इतीति । तचाव्ययत्वान्न लिङ्गवाचि । अतः तद्विशेषणत्वात् साध्यमिति नपुंसकलिङ्गक एव प्रयोगः । एवं द्वितीयतृतीयवाक्ययोः धातोर्विशेष्यवाचित्वात् तस्य च लिङ्गावाचकत्वात् समानाधिकरणविशेषणवाचिनः कुटिलग्रीवमृदुपदद्वयस्य प्रयोगः क्लीबे एव । यद्यप्यत्र धात्वर्थविशेषणत्वेनापि नपुंसकता सिद्धा तथापि सामान्यप्रकारान्तरेणापि तद्बोधनं व्युत्पत्त्याधायकमेव ॥४६॥

द्रव्योपसर्जनीभूतगुणस्य च विशेषणे ।
प्रयुक्ताः क्लीबलिङ्गाः स्युर्यथात्यन्तं पटुर्भवान् ॥४७॥

( ७ ) द्रव्योपसर्जनीभूतगुणविशेषणपरत्वेन प्रयुक्ताः अर्थात् पटुत्वमृदुत्वादिगुणविशिष्टबोधकपटुमृद्वादिशब्दबोध्यपटुत्वादेः समानाधिकरणविशेषणपराः नपुंसकलिङ्गा एव भवन्ति । यथा—भवानत्यन्तं पटुः । पटोऽयं नितान्तं कोमलः ।

अत्र अत्यन्तपदार्थः पटुत्वेऽभेदेन विशेषणं, पटुत्वं च तदाश्रयरूपद्रव्ये इति द्रव्यं प्रत्युपसर्जनं ( विशेषणं ) वर्तते । एवं कोमलत्वमपि स्वाश्रयपटद्रव्यं प्रत्युपसर्जनं तद्विशेषणबोधकात्यन्तशब्दः क्लीबे प्रयुक्तः ।

वस्तुतस्तु व्युत्पत्तिवैचित्र्यात् पदार्थैकदेशेऽभेदेन विशेषणपरा नपुंसकलिङ्गा एव प्रयोक्तव्या इति व्यवस्था वाच्या सुगमत्वात् ।

नन्वेवं परमः सुन्दरो महान् पण्डित इत्यादयः कथं प्रयोगाः ? अत्र हि परममहदादिपदार्थोऽभेदेन सौन्दर्यपाण्डित्यादिरूपे पदार्थैकदेशे एव विशेषणमिति चेत्—न । पूर्वोक्तनियमस्वीकारेऽप्येतद्दोषसद्भावात् । तस्मात् परमः सुन्दरो महान् पण्डित इत्यादौ सौन्दर्यपाण्डित्यादिगतोत्कर्षेण तदाश्रयव्यक्तेरप्युत्कृष्टतया

सुन्दरपण्डितादिपदार्थे एव परममहदादिपदार्थाभेदान्वयेन पदार्थैकदेशविरोधत्वाभावान्नोक्तदोषावकाशः। अत एव परमं सुन्दरमानय, महता पण्डितेनोक्तमित्यादौ परमादिपदार्थस्य कर्मत्वकर्तृत्वाद्युपपत्तिः। न चैवमत्यन्तं पटुरित्यादावपि पदार्थे एवान्वयः शङ्क्यः, पुंलिङ्गत्वापत्तेः, अत्यन्तं पटुना साध्यमेतत् इत्यादिप्रयोगानुपपत्तेश्च। तस्मादिह पदार्थैकदेशेऽत्यन्तादिपदार्थाभेदान्वय आवश्यकः ॥४७॥

येषां क्लीबत्वमत्रोक्तं त एकवचनानुगाः ॥४८॥

(८) एतत्प्रकरणे येषां शब्दानां नपुंसकत्वं बोधितं ते एकवचनानुगा भवन्ति। तेभ्यः परमेकवचनमेव प्रयुज्यते इति यावत्। यथा—न मे किञ्चन कर्तव्यमस्ति, स्तोकं पचन्ति, अत्यन्तं पटवः ॥४८॥

न्याय्यं लिङ्गं परित्यज्य श्रयन्ति क्लीबतां क्वचित्।
तथा हि धीरैः सामान्ये नपुंसकमितीरितम् ॥४९॥

विशेष्यनिघ्नाः 'या विशेष्येषु दृश्यन्ते' इति न्यायप्राप्तं लिङ्गं परित्यज्य क्वचित् नपुंसकलिङ्गभाजो भवन्ति। ते प्रदर्श्यन्ते—

(९) बहुव्रीहौ क्वचित् पूर्वपदं क्वचिदुत्तरपदं विशेष्यनिघ्नस्वभावविरुद्धनपुंसकलिङ्गभाग् भवति। यथा—

दृढभक्ति, स्त्रीकर्तृकं श्राद्धम्, स्त्रीस्वामिकं धनम्, घटो नेति प्रतीतिसाक्षिकोऽभावः। एवमाद्ये दृढा भक्तिर्यस्येति विग्रहात् दृढाभक्तिरिति न्यायप्राप्तः प्रयोगः। न चात्र पुंवद्भावः, अप्रियादिष्विलुप्तत्वात्। तत्र सामान्ये नपुंसकलिङ्गविवक्षायां टाबभावात् दृढभक्तिरिति। स्त्रीत्वविवक्षायान्तु दृढाभक्तिरिति।

द्वितीये स्त्रीकर्तृकमित्यत्र स्त्रीकर्त्रीकमिति प्रयोगः प्राप्तस्तत्र सामान्ये नपुंसकविवक्षया कर्तृशब्दात्स्त्रीप्रत्ययाभावात् स्त्रीकर्तृकमिति। स्त्रीकर्त्रीकमित्यपि भवत्येव।

तृतीये स्त्रीस्वामिकमित्यत्र स्त्रीस्वामिनीकमिति प्रयोगः प्राप्तस्तत्रापि सामान्ये नपुंसकविवक्षया तथा प्रयोगः।

एवं चतुर्थेऽपि प्रतीतिसाक्षिणीक इति यद्यपि न्याय्यं तथापि सामान्ये नपुंसकविवक्षया प्रतीतिसाक्षिकमित्यपि भवति।

(१०) एवं त्वतलादिभावतद्धितप्रकृतेः क्वचिद्विशेष्यनिघ्नस्वभावविरुद्धनपुंसकलिङ्गबोधकत्वम्। यथा—शरदः कृतार्थता, वनिताया रतिदुःखशीलता, नियतेर्बलवत्त्वम्, स्त्रीणां सुकुमारत्वम्। अत्र तावदौचित्यात् कृतार्थता इत्यादयः प्रयोगाः प्राप्ताः। तथा हि स्त्रीप्रत्ययतद्धितप्रत्यययोः प्राप्तौ प्रथमं स्त्रीप्रत्यय एव भवतीति वैयाकरणसिद्धान्तः। तथा च कृतार्थादिशब्दानां शरदादिसमानाधिकरणविशेषणसमर्पकत्वेन प्रयोक्तव्यत्वे प्रथमं स्त्रीप्रत्यये सति पश्चात्तलादिप्रत्ययः स्यात्। एवं च कृतार्थता इत्यादिप्रयोगः प्राप्तो न कृतार्थतेत्यादिः। तत्रैतादृशः प्रयोगो नपुंसकत्वविवक्षणाद्भवति।

"त्वतलोर्गुणवचनस्ये"ति पुंवद्भावेन तु न तत्सिद्धिः, आकडारादितिसूत्रस्थभाष्यपरिभाषितगुणवचनत्वाभावात्। तत्र हि समास-कृदन्त-तद्धितान्ताव्यय-सर्वनाम-जाति-संख्या-भिन्नमर्थवच्छब्दस्वरूपं गुणवचनसंज्ञमिति परिभाषितम्।

वस्तुतस्तु त्वतलोरिति विषयसप्तमी तस्मात्त्वतलोर्विषये पूर्वमेव पुंवद्भावः प्राप्तः तद्धितान्तपर्युदासान्न भवतीति।

अत एव 'नेष्टं पुरो द्वारवतीत्वमासीत्' इति माघपद्ये द्वारवतीशब्दस्य तद्धितान्तत्वेनोक्तगुणवचनत्वाभावात् न पुंवद्भावः। यद्यपि द्वारवतीशब्दो न तद्धितान्तः तथापि गुणवचनस्येत्यस्य गुणवचनप्रकृतिकस्त्रीप्रत्ययान्तस्येत्यर्थः करणीयः। तथा च द्वारवच्छब्दो न गुणवचनं, तद्धितान्तत्वेन पर्युदस्यमानत्वात्। अतो द्वारवतीशब्दस्य गुणवचनप्रकृतिकस्त्रीप्रत्ययान्तत्वाभावान्न पुंवत्त्वम्। किञ्च लिङ्गविशिष्टपरिभाषाबलात् तद्धितान्तपदेन द्वारवतीशब्दस्यापि ग्रहणात् तस्य गुणवचनसंज्ञायां पर्युदासान्न पुंवत्त्वमिति। वस्तुतस्तु त्वतलोरिति विषयसप्तमी अतस्त्वतलोर्विषये पूर्वमेव पुंवद्भावः प्राप्तस्तद्धितान्तपर्युदासान्न भवतीति। एतावता प्रघट्टेन विशेष्यनिघ्नानां प्रयोगवैचित्र्यं प्रभूतमुक्तम्।

### प्रयोगवैचित्र्ये प्रमाणम्

अथैवंविधवैचित्र्ये किं प्रमाणमिति चेत्—उच्यते। तत्रमुख्यं प्रमाणं तथा तथा प्रामाणिकप्रयोगदर्शनमेव लिङ्गानां लौकिकत्वात्। अत एव पाणिनिना "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इत्युक्तम्। प्रामाणिकप्रयोगदर्शनैरेव लिङ्गज्ञानस्य सम्भवेन अनुगतरूपेण संक्षिप्य लिङ्गोपदेशस्यासंभवेन च तदुपदेशवैयर्थ्यमिति तदाशयः। लिङ्गबोधकशब्दप्रयोगव्यवस्था तु न काचित् शास्त्रकारेण प्रदर्शिता। अभियुक्तैस्तु प्रामाणिकप्रयोगमूला काचन व्यवस्था प्रतिपादिता। सा चेयमेका—

या विशेष्येषु दृश्यन्ते इत्यस्य व्याख्या

"या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः।
प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे" ॥

अस्यार्थः—विशेष्ये यल्लिङ्गं या च संख्या प्रतीयते तत्समानाधिकरणविशेषणेऽपि प्रायेण तदेव लिङ्गं सैव च संख्या प्रत्येया। अर्थात् तल्लिङ्गप्रयुक्तमेव लिङ्गनिमित्तकं शास्त्रीयकार्यं तत्संख्याबोधकमेव वचनमपि तादृशविशेषणवाचके कर्तव्यम्। एवं विशेष्यबोधकात् या विभक्तिः प्रथमादिरूपा दृश्यते सैव विभक्तिः तत्समानाधिकरणविशेषणबोधकाद्विधेयेति ।) यथा नीलो घट आनीयतामित्यत्र विशेष्ये घटे पुंस्त्वैकत्वे प्रतीयेते, ते एव तत्समानाधिकरणविशेषणे नीलपदार्थेऽपि प्रत्येये। तथा च तत्र पुंस्त्वनिमित्तकार्यप्रसक्त्या तत्प्रयुक्तशास्त्रीयकार्याभावेऽपि एकत्वसंख्यानिबन्धनमेकवचनमेव तद्बोधकात्। तथा विशेष्यवाचकघटशब्दाद्या प्रथमात्मिका विभक्तिरस्ति सैव नीलरूपविशेषणवाचकादपीति। एनेन नीलं घटः, नीलौ घटः, नीलेन घटः इत्यादीनामसाधुत्वं बोधितं भवति। तेन येषां मते समानाधिकरणविशेषणविभक्तिरभेदार्था तन्मतेऽपि वचनादिव्यवस्था सिद्धा।

प्राय इत्युपादानात् स्वतन्त्रलिङ्गानां नियतवचनानां च व्यावृत्तिः। तेन इदं द्रव्यं पद्मः इत्यादौ न विशेष्यलिङ्गतानियमः। तथा शतं ब्राह्मणाः, मैथिली रामस्य दाराः इत्यादौ उक्तनियमानाक्रान्त्या विभिन्नवचनत्वेऽपि भिन्नलिङ्गत्वेऽपि च न साधुत्वहानिः।

एवं प्राय इत्यनेन यस्य "भाषितपुंस्कं पुंवद्गालवस्य" इति गालवाचार्यमते पुंवद्भावस्तस्यापि व्यावृत्तिरिति 'मृद्वी काव्ये' इत्यादिप्रयोगोपपत्तिः। अन्यथा काव्यशब्दस्य नित्यनपुंसकतया 'मृदुनि काव्ये' इत्येव प्रयोगः स्यात्।

इदन्तु बोध्यम्। स्वतन्त्रलिङ्गानां लिङ्गांशे एव स्वातन्त्र्यात् व्यायाप्रवृत्तिः। संख्यांशे विभक्त्यंशे च प्रवृत्तिर्भवत्येव। तेन 'पङ्कं पङ्को वा जलमिश्रिता मृत्' इति त्रिभिन्नलिङ्गप्रयोगेऽपि न विभिन्नवचनता विभिन्नविभक्तिता वा। एवं नियतवचनलिङ्गानां वचनलिङ्गयोरेव नैयत्यादुक्तनियमाप्रवृत्तिः। विभक्त्यंशे तु प्रवृत्तिर्भवत्येव। तेन मैथिली रामस्य दारा इत्यादौ विभिन्नलिङ्गसंख्यकत्वेऽपि न विभिन्नविभक्तिता। अत्र विभक्तिपदेन प्रथमादयः सप्तविभक्तयो बोध्याः, त्रिकं विभक्तिसंज्ञमिति भाष्यात् तत्रत्या भाष्यकृता सप्त सिन्धव इत्यस्य सप्त विभक्तय इति व्याख्याकरणाच्च।

'इत्तोहागमलघ्वसन्देहाः प्रयोजनमि'तिभाष्यप्रयोगस्तु प्रयोजनं प्रत्येकमनभ्युपगम्य

तद्गतैकत्वपरतयोपपादनीयः। प्रयोजनगतबहुत्वपरत्वे तु बहुवचनमेव। तथा च भाष्य-प्रयोगः। 'इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि' इति।

प्रयोजनत्वगतैकत्वपरत्वे कुतो नोक्तन्यायप्रवृत्तिः? उच्यते। प्राय इत्यनेन एकत्वान्वयित्वेन तात्पर्यविषयत्वार्थतावच्छेदकबोधकस्यापि व्यावृत्तेः। अत एव 'इति हेतुत्तद्भवे' इति कारिकाया 'इति त्रयः समुदिता हेतुः' इति काव्यप्रकाशव्याख्यामन्यः संगच्छते। अत्र हि हेतुपदं कार्योत्पत्तिप्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नपरं तादृशसमुदायत्वान्वितमेकत्वं निवक्षितमिति नोक्तन्यायविषयतेति त्रयो हेतुरिति विभिन्नवचनतोपपत्तिः। एवं च 'या विशेष्येषु दृश्यन्त' इति कारिकायाः अर्थत्रयं विभजनीयम्। तथा हि—(१) यत् अनियतलिङ्गं स्वतन्त्रलिङ्गभिन्नं यल्लिङ्गावच्छिन्नविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकं तस्य तल्लिङ्गावच्छिन्नप्रकारताप्रयोजकत्वम् इत्येकोऽर्थः। तेन पुरूरवोमाद्रवसौ विश्वेदेवा इत्यादिप्रयोगोपपत्तिः। स्वतन्त्रलिङ्गभिन्नमित्युक्त्या च इदं वस्तु अर्गला इत्यादिप्रयोगा निराबाधाः।

(२) द्वितीयश्चायमर्थः—यत् अनियतवचनमेकत्वान्वयित्वेन तात्पर्यविषयत्वार्थतावच्छेदकबोधकं यत्संख्यावत्त्वेन प्रतीयमानार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकं तस्य तत्संख्यावच्छिन्नप्रकारताप्रयोजकत्वमेव। तेन घटो द्रव्यमित्यादौ लिङ्गांशे नियमस्य प्रवृत्त्यभावेऽपि वचनांशे प्रवृत्त्या समानवचनत्वमेव।

(३) तृतीयश्चायमर्थः—समानाधिकरणविशेषणवाचकं विशेष्यवाचकविभक्तिसमानविभक्तिकमेवेति। अत्र नियतलिङ्गभिन्नत्वेन वा नियतवचनभिन्नत्वेन वा संकोचाभावात् पूर्वोक्तनियमविषयेऽप्येतन्नियमप्रवृत्त्या मैथिली दाराः, शतं कलसा, इत्यादौ समानविभक्तिता भवत्येव। अत्रावशिष्टविचारोऽग्रे वचनविचारे द्रष्टव्यः।

### सामान्ये नपुंसकम्

अपरा चेयं लिङ्गव्यवस्था वैयाकरणैरुच्यते सामान्ये नपुंसकमिति। तथा च भट्टोजिदीक्षितः सिद्धान्तकौमुद्या 'स्त्रियाः पुंवदि'तिसूत्रव्याख्यावसरे प्राह—सामान्ये नपुंसकं दृढं भक्तिर्यस्य स दृढभक्तिरिति।

तत्र शब्दरत्नेन्दुशेखरे नागेशभट्टः 'अदार्ढ्यनिवृत्तिमात्रपरत्वेन लिङ्गविशेषविवक्षा नेति' भावः। तद्विवक्षायां दृढाभक्तिरितिसिध्यर्थं प्रियादिषु तत्पाठ इति व्याख्यत्।

अत्र लिङ्गविशेषविवक्षा नेत्युक्त्या लिङ्गसामान्यविवक्षेति लभ्यते। अन्यथा लिङ्गविवक्षा नेति वदेत्। लिङ्गविशेषविवक्षा च स्त्रीत्वत्वादिविशेषधर्मपुरस्कारेण विवक्षा। लिङ्गसामान्यविवक्षा तु लिङ्गत्वेन बोधनेच्छेति स्पष्टमेव। न चैवं लिङ्गविशेषाविव-

वक्षया नपुंसकत्वे घटमस्तीति प्रयोगापत्तिरिति वाच्यम्, सामान्ये नपुंसकताया विशेष्यनिघ्नविषयत्वात् प्रामाणिकप्रयोगविषयत्वाच्च । अत एव सामान्ये नपुंसकत्वविवक्षया नीलं घट इत्यादयो न प्रयोगाः, शिष्टव्यवहारेष्वदर्शनात् । एवञ्च दृढभक्तिरिति ज्येष्ठे, सा शुशोच रतिदुःखशीलताम्, निरीक्ष्य मेने शरदः कृतार्थता, इत्यादिप्रामाणिकप्रयोगानुसारेण सामान्ये नपुंसकता ।

अत्रेदं तत्त्वम् । विशेष्यनिघ्नानां पुंस्त्वत्वादिविशेषरूपेण लिङ्गत्वरूपसामान्यधर्मेण च लिङ्गबोधकत्वम् । तत्र पुंस्त्वनिमित्तकं कार्यं पुंस्त्वत्वरूपेण लिङ्गबोधे भवति, एवं स्त्रीत्वनिबन्धनं स्त्रीत्वत्वरूपविशेषधर्मेण बोधे । नपुंसकत्वनिमित्तकं तु नपुंसकत्वत्वरूपविशेषधर्मेण लिङ्गत्वरूपसामान्यधर्मेण वा नपुंसकत्वबोधे सति जायते । एतदेव सामान्ये नपुंसकमित्यनेनोच्यते । तथा च धनं वनमित्यादौ नपुंसकत्वस्य नपुंसकत्वत्वरूपविशेषधर्मेण बोधादमादिकं प्रवर्तते, दृढभक्तिरित्यादौ तु लिङ्गत्वरूपसामान्यधर्मेण बोधात् । स्त्रीत्वत्वरूपविशेषधर्मेण लिङ्गस्य बोधाभावान्न स्त्रीत्वनिमित्तकं टाबादि कार्यम् । तस्यापत्यमित्यत्र नपुंसकत्वमविवक्षितमित्यस्य तु अण्प्रत्ययवाच्यत्वेनाविवक्षितमित्यर्थः । तथा च नपुंसकत्वत्वेन बोधस्यासत्त्वेन न नपुंसकत्वप्रयुक्तामादेशानुपपत्तिः । तत्र जातः, तत्र भवः, इत्यादावविवक्षया लिङ्गस्य बोध एव नेति नामादेशापत्तिरिति ।

### अनुकरणलिङ्गविचारः

अनुकरणमनुकार्यलिङ्गभाग्भवति । तेन गौर्यां गकारः पीताम्बरायां पदद्वयस्य बहुव्रीहिः इत्यादौ गौरीपीताम्बराप्रभृतिशब्दाः स्त्रीलिङ्गाः अनुकरणं प्रकृतिवदिति न्यायात् । अत एव तत्र ङ्यावन्तप्रयुक्तमपि कार्यम् ।

वस्तुनि बहुव्रीहाविति तु सौत्रं नपुंसकत्वम्, सामान्ये नपुंसकताया विशेष्यनिघ्नविषयत्वात् ।

यत्तु सिद्धान्तकौमुद्युक्तम् क्लीबनिर्देशात्तु शब्दस्वरूपापेक्षयेति, तन्न यदि शब्दस्वरूपे इत्यध्याहारे तात्पर्यं तदापि वस्तुशब्दस्य विशेष्यनिघ्नत्वाभावान्नपुंसकनिर्देशानुपपत्तिरेव । यदि वा वस्तुशब्दस्य वस्तुशब्दस्वरूपे लक्षणेत्याशयः, तदापि पुंस्त्वमेव स्यान्न नपुंसकत्वं, न हि लक्षणायां लिङ्गव्यत्ययः, नदीरत्नं गङ्गेत्यादौ रत्नादिपदस्य रत्नसदृशादिलक्षकस्य लिङ्गव्यत्ययादर्शनात् । शुक्लादिशब्दास्तु गुणिनामपि वाचका एव न लक्षकाः 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्युक्तत्वात् । न च तत्र लक्षणया बोध्यते, अपि तु शक्त्यैव । तस्मात् शब्दस्वरूपापेक्षयेति चिन्त्यमेतत् । एवमन्यत्र [illegible] इत्युक्ति-

रपि चिन्त्या। यदि हि तौ शब्दौ न लिङ्गबोधकौ तर्हि तदनुकरणे युष्मदस्मदी इत्यत्र कुतो नपुंसकता ? यदि च लिङ्गबोधकौ तदा अलिङ्गे इति कथनमसंगतमिति ॥४६॥

तच्छब्दलिङ्गवचनविचारः

अथ बुद्धिविषयवाचितच्छब्दस्य लौकिकलिङ्गवाचकत्वासम्भवः, गृहे घटोऽस्ति तमानयेत्यतो बाधानापत्तेः। एवञ्च 'तामानय नलाद्दुष्टा' मिति शुम्भोक्तवाक्यात् स्त्रिया एव कथं बोधः? स्त्रीप्रत्ययसमभिव्याहृततत्पदात् स्त्रिया एव बोध इति तु वक्तुमशक्यम्। 'शरदागता सा रमणीया, व्यक्तिस्तदा सा प्रथमाभिधेये'त्यादौ व्यभिचारादिति चेत्-अत्रोच्यते—

तच्छब्दो यत्पदार्थस्य परामर्शनहेतवे ।
प्रयुज्यते स तल्लिङ्गतत्संख्याबोधको भवेत् ॥५०॥

तच्छब्दो हि न स्वतन्त्रलिङ्गसंख्यको नापि विशेष्यनिघ्नः, अपि तु बुद्धिस्थयत्पदार्थपरामर्शाय प्रयुज्यते तत्पदाधीनलिङ्गस्तदधीनवचनश्च। एवञ्च 'काप्यास्ते स्त्री महाराज भासयन्ती हिमाचलम्' इति चण्डमुण्डोक्तवाक्यघटकस्त्रीपदार्थपरामर्शहेतवे प्रयुक्तस्तामितिशब्दः स्त्रियमेव बोधयतीति युक्तमेतत्। स च स्त्रीपदाधीनलिङ्गसंख्यकत्वात् स्त्रीप्रत्ययमेकवचनं च भजति।

या गृहेऽस्ति तामानयेत्यत्र पुरुष इत्यादेरध्याहारायोगात् स्त्रिया एव बोधः। व्यक्त्यादिपदाध्यारे तु कदाचित्पुंसेऽपि बोधः संभवत्येव।

प्रसिद्धवाचितच्छब्दस्तु विशेष्यनिघ्न एव। *तस्मै कृष्णाय नमः, तामार्यां प्रणमामीत्यादौ* तथा दर्शनात् ॥५०॥

अथ 'शैत्यं हि यत् सा प्रकृतिर्जलस्ये'त्यत्र तच्छब्दस्य स्त्रीलिङ्गता कथम्? नपुंसकशैत्यशब्दार्थपरामर्शकतया नपुंसकलिङ्गकत्वस्यैवोचितत्वादित्यौचित्यात्। अत्रोच्यते—

उद्देश्यप्रतिनिर्देश्याभेदबोधवत्तत्पदम् ।
तत्तल्लिङ्गमुपादत्ते पर्यायेणेति निर्णयः ॥५१॥

तच्छब्दो यत्किञ्चिच्छब्दबोधितमुद्देश्यमर्थं परामृशन् यद्भेदसम्बन्धावच्छिन्नविधेयतानिरूपितोद्देश्यताप्रयोजकस्तदा कदाचिदुद्देश्यगतं लिङ्गं बोधयति कदाचिद्विधेयगतम्, शब्दस्वभाववैचित्र्यात्। यथा 'शैत्यं हो'त्यत्र तच्छब्दः शैत्यशब्दबोधितशैत्यरूप-

मुद्देश्यं परामृशन् प्रकृतिपदार्थनिष्ठाभेदसम्बन्धावच्छिन्नविधेयतानिरूपितामुद्देश्यतां प्रयोजयतीति तस्य विधेयभूतप्रकृतिपदार्थगतस्त्रीत्वबोधकतया स्त्रीप्रत्ययान्तता ।

तत्रैव यदि सेतिपदमपनीय तत् इत्युच्यते तदा तत्योद्देश्यभूतशैत्यपदार्थगतक्लीबत्वबोधकत्वं स्यादित्येच्छिको द्विविधोऽपि प्रयोगः साधुः । एवं तत्र यो विप्रो दृष्टः स देवदत्तस्यापत्यम् स देवदत्तस्यापत्यमिति वा । अत्र यच्छब्दाप्रयोगेऽपि तथैव ।

एषा च लिङ्गव्यवस्था त्यदाद्यन्तर्गतानाम् इदम् एतद् अदस् शब्दानामपि बोध्या उक्तं च पतञ्जलिभाष्ये कैयटेन "उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्यायेण तत्तल्लिङ्गभाग्भवती'ति । अस्यार्थः । उद्देश्यप्रतिनिर्देश्ययोः उद्देश्यविधेययोःऐक्यमापादयत् अभेदं बोधयत् सर्वनाम तत्संज्ञकतदेतदादिशब्दः पर्यायेण तत्तल्लिङ्गभाक् कदाचिदुद्देश्यगतस्य कदाचिद्विधेयगतस्य लिङ्गस्य बोधकं भवतीति ॥५१॥

शक्यशब्दे लिङ्गवचनविचार

द्विविधः शक्यशब्दोऽस्ति विशेष्याधीनलिङ्गकः ।
नित्यक्लीबत्वलिङ्गश्च नित्यैकवचनान्तकः ॥५२॥
अन्त्यः प्रायेण तुमन्तक्रियाकर्मणि दृश्यते ।
प्रथमान्तविशेष्यस्य विशेषणसमर्पकः ॥५३॥

यथा गृहशब्दो द्विविधः । पुंलिङ्गत्वे सति नित्यं बहुवचनान्तः प्रथमः । 'गृहाः पुंसि च भूम्न्येवे'त्यमरोक्तः, द्वितीयस्तुनपुंसकलिङ्गत्वे सत्यनियतवचनः 'गृहं गेहोदवसित'मिति तेनैवोक्तः । यथा वा 'स्त्रियां सुमनसः पुष्पमि'त्यमरः, 'सुमनाः पुष्पमालत्यो'रिति मेदिनी । उभाभ्यां सुमनस्शब्दो द्विविधो लभ्यते नित्यबहुवचनान्तोऽनियतवचनश्च ।

तथा शक्यशब्दोऽपि द्विविधः । नित्यप्रथमैकवचनान्तत्वे सति नित्यनपुंसकलिङ्गः प्रथमः । द्वितीयस्तु कृत्यप्रभृतिशब्दवत् त्रिलिङ्गत्वे सति विशेष्यनिघ्नः । तत्र विशेष्यस्य पुंस्त्वे स्त्रीत्वेऽपि वा द्विबहुत्वेऽपि वा शक्यमिति समानाधिकरणविशेषणपदं सर्वत्र साधु । नित्यनपुंसकत्वेन नित्यैकवचनान्तत्वेन च लिङ्गसंख्याव्यत्ययाभावात् । यथा ग्रामो गन्तुं शक्यम्, भोजनेन क्षुत् प्रतिहन्तुं शक्यम्, वातरोगात् बाहू उत्थापयितुम-शक्यम्, वाताः सेवितुं शक्यम् । एषु सर्वत्र अनियतवचनस्य त्रिलिङ्गस्य लिङ्गवचनव्यत्ययेन योजना कर्तुं शक्यते । यथा ग्रामो गन्तुं शक्यः, भोजनेन क्षुत् प्रतिहन्तुं शक्या, बाहू उत्थापयितुं शक्यौ, वाताः सेवितुं शक्या इति ।

तत्र शक्यशब्दस्य नित्यनपुंसकत्वे प्रमाणन्तु 'शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तु'मिति पस्पशायां महाभाष्यप्रयोगः। विशेष्यनिघ्नत्वैव शक्यशब्दस्य सत्त्वे तु क्षुच्छब्दस्य स्त्रीलिङ्गत्वात् शक्या चानेनेति वदेत्। गोकुलनाथेनाप्युक्तभाष्यप्रयोगप्रामाण्यात् तथाविधप्रयोगाणां साधुत्वं पदवाक्यरत्नाकरे प्रतिपादितम्।

यत्तु क्षुत्प्रतिहन्तुं शक्यमिति भाष्यप्रयोगस्य सामान्ये नपुंसकत्वेनापि सिद्धया तस्य नित्यनपुंसकत्वाभ्युपगमो व्यर्थ इति तत् न। सामान्ये नपुंसकताया धृत्तिघटकमात्रशब्दविषयत्वात् धृत्तिष्वेव प्रामाणिकतथाविधप्रयोगदर्शनात्। किञ्च सामान्ये नपुंसकमित्यनेन नपुंसकत्वमात्रमुपपादयितुं शक्यं न तु नित्यनपुंसकत्वे सति नित्यैकवचनान्तत्वम्। तस्यास्वीकारे तु 'शक्यमञ्जलिना पातुं वाताः कुसुमगन्धिन' इति रामायणप्रयोगो नोपपद्येत। तस्मात् नित्यैकवचनान्तनपुंसकशक्यशब्दाङ्गीकार आवश्यकः ॥५२-५३॥

इति लिङ्गवचनविचारे लिङ्गनिरूपणं समाप्तम्।

## अथ वचननिरूपणम्

वचनशब्दार्थः

प्रोच्यते वचनं संख्या तथैकवचनादिकम्
विचार्यते तदुभयं कुत्र कीदृग् भवेदिति ॥५४॥

यद्यपि वचनशब्द उक्तिपर्यायः प्रसिद्धः "व्याहार उक्तिर्लपितं भाषितं वचनं वच" इत्यमरकोषात् तथापीह लिङ्गवचनविचारे संख्याबोधकः पाणिनिसंज्ञितैकवचनादिबोधकश्च तन्त्रेणाभिमतः।

अस्ति च संख्यापर्यायोऽपि वचनशब्दः "लुपि युक्तवद्व्यक्तिवचने", "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति पाणिनीयसूत्रयोः संख्यावाचकस्य वचनशब्दस्य दर्शनात्। तथैकवचनद्विवचनबहुवचनानां सामान्येन वाचकोऽपि सः "क्रियासमभिव्याहारे लोट्" इति सूत्रे सिद्धान्तकौमुद्या पुरुषवचनसंज्ञे तु नेहातिदिश्येते इत्येकवचनादिवाचकवचनशब्दस्योपादानात्। व्युत्पत्तिवादेऽपि "यत्र विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यविशेषणवाचकपदयोः समानवचनत्वम्" इत्येकवचनादिवाचकस्य वचनशब्दस्योपादानाच्च। 'नामैकदेशो नामग्रहणेन गृह्यते' इति न्यायात् भामादिशब्दे सत्यभामादिबोधकत्ववत् वचनशब्दे एकवचनादिबोधकत्वसंभवाच्च।

बहुवचनमपि वचनमिदानीं विचार्यते येन कः कथमत् प्रवचनं साधु, का वा संख्या स्येयति बालानां निर्णयः स्यात्।

### विभक्तय एकत्वद्वित्वबहुत्वानां बोधिकाः

संख्या चैकत्वादिपरार्धान्ता। तथा त्रित्वादिव्यापकं बहुत्वमपि संख्या, पाणिनिना "बहुगणवतुडति संख्या" इत्यनेन संख्यासंज्ञकत्वेन बोधनात्। तासां मध्ये केवलमेकत्वद्वित्वबहुत्वसंख्यानां द्योतिका वाचिका वा एकवचनद्विवचनबहुवचनरूपा विभक्तयः सुप्तिङश्च भवन्ति।

"द्योतिका वाचिका वा सुर्द्वित्वादीनां विभक्तयः" इति हरिणोक्तत्वात्। तत्र वैयाकरणानां मते द्योतिकाः। नैयायिकानां मते तु वाचिका इति विवेकः। तत्र शाब्दिकमते एकत्वादिर्नामार्थोऽपि विभक्तिभिर्द्योत्यार्थः। सा चैकवचनादिसमभिव्याहारात् घटः घटौ गच्छति गच्छतः इत्यादौ प्रतीयते। तथा च तदर्थतात्पर्यग्राहकत्वमेव तदर्थद्योतकत्वम्। तार्किकमते तु संख्या विभक्तेरेवार्थो न प्रकृतेरिति बोध्यम्। तथा च पाणिनिराह "बहुषु बहुवचनम्", "द्व्येकयोर्द्विवचनैकवचने" इति। स्वौजसित्यादौ तिप्तसित्यादौ च एकवचनादिक्रमेण अभिधानम्। अत्र त्ववरोहणक्रमेण बहुवचनद्विवचनैकवचनानां विधानमिति। आभ्यां च सूत्राभ्यां बहुत्वद्वित्वैकत्वेषु विवक्षितेषु बहुवचनद्विवचनैकवचनानां साधुत्वं लभ्यते।

### बहुत्वादावेव बहुवचनादि

अपि च "बहुषु बहुवचनम्", "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रद्वयं नियमार्थम्। बहुत्वादौ विवक्षिते एव बहुवचनादि साध्विति। अत एवैकद्विकर्तृके पाके एते पचन्तीति न प्रयोगः। न वैकबहुलकर्तृके इमौ पचत इति।

नियमार्थता कथमिति चेत्? इत्थम्। वैयाकरणाः स्वार्थद्रव्यलिङ्गसंख्याकारकाणां नामार्थत्वं, क्रियात्वक्रियाकालसंख्याकारकाणां धात्वर्थत्वं मन्यन्ते। तथा च स्वादीनां तिबादीनाञ्च बहुत्वादिकर्मत्वाद्यर्थपुरस्कारेण विधानाभावेऽपि स्वौजसित्यादिना तिपतसित्यादिना च शास्त्रेण सामान्यतो विधानेनैव 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ती'ति न्यायाद्बहुत्वादौ कर्मत्वादौ च सिद्धया बहुषु बहुवचनमित्यादेः कर्मणि द्वितीयेत्यादेः ल कर्मणि चेत्यादेश्च नियमत्वम्। इत्थं नियमार्थता भाष्यकृतैव सिद्धान्तिता।

### एकत्वार्थेऽपि क्वचिद्बहुवचनम्

नन्वेवं यदि बहुष्वित्यादिशास्त्रद्वयेन बहुत्वादौ विवक्षिते एव बहुवचनादयो साध्यन्ते

वदाऽव्ययेभ्य. कथ सुबुत्पत्ति ? तदर्थस्यासत्त्वरूपतया सख्यान्वयायोग्यत्वेन सख्या-विवक्षाया असभवात्। न चाव्ययेभ्य. सुप श्रवणाभावेन सुपोऽनुत्पत्तावपि का क्षति-रिति वाच्यम्, "अव्ययादाप्सुप" इति सूत्रासगते । किञ्च तत सुबभावे सुबन्तत्वा भावेन पदत्वाभावात्, 'उच्चैस्तेऽध्ययन शनैर्मे' इत्यादौ पदात्परत्वाभावेन तेमयाद्या देशाभावप्रसङ्ग इति चेत्—अत्रोच्यते

औत्सर्गिकैकवचनसाधनम्

एकवचनमित्युत्सर्ग कर्तव्य । तस्य च द्विबहुवयोर्द्विवचनबहुवचने बाधके भविष्यत इत्याश्रित्य द्वयेकयोरित्येकग्रहणस्य भाष्यकृता प्रत्याख्यानात्तथोत्तर मुनीना प्रामाण्यादौत्सर्गिकस्यैकवचनस्य सख्यानिमित्तकत्वाभावेन एकत्वबोधाभावेऽपि प्रवृत्त्या अव्ययेभ्य पचतिरूपादिभ्यश्चैकवचन जायते। तथाव्ययेभ्यो न केवल प्रथमाया एव अपि तु अव्ययादाप्सुप इतिप्रत्याहारग्रहणसामर्थ्यात्सकलविभक्तीनाम्। तेन "नाव्ययीभावादि"ति सूत्रे पञ्चम्या इति चरितार्थम्। उपकण्ठम् उपकण्ठेन वा इत्यादिवैकल्पिकरूपाणि च सिद्धयन्ति तृतीयासप्तम्योर्बहुलमित्युक्तत्वात्। प्रशस्त पचति पचतिरूप देवदत्त, प्रशस्त पचत पचतो रूप देवदत्तयज्ञदत्तौ इत्यादौ तु प्रथमाया एवैकवचनम्। रूपबादिप्रत्ययान्तात्तृतीयादे प्रयोगादर्शनेनानभिधानात् योगविभागादिप्रसिद्धिर्नत्वनिष्पादनमिति न्यायाच्च। एकग्रहणाकरणे हि एकवचनमिति योगविभागस्यावश्यकत्वात्।

नन्वेव बहुपु बहुवचनमित्यादेर्नियमत्वेऽपि स्वादितिवादिविधायकसामान्यशास्त्रा-भ्या द्वित्वे बहुवचन, बहुत्वे द्विवचन च मा भूत् एतदर्थ बहुत्वद्वित्वयोरेव बहुवचन-द्विवचने भवत इति नियमाश्रयणे द्वित्वादावेकवचनापत्ति । एतदर्थं यदि बहुत्वद्वित्व-योर्बहुवचनद्विवचने एवेति नियम आश्रीयते तदैकस्मिन्बहुवचनद्विवचनयोरापत्ति । तस्मादेकग्रहणमावश्यकम्। तत्सत्त्वे एकत्वे एवैकवचनमिति नियमस्यापि सिद्ध्या नोक्तदोषावकाश ।

एवमेव हि "शेषे प्रथम" इति सूत्रे शेषग्रहणमप्यावश्यकं भवति। तथा हि तदभावे यदि श्रूयमाणेऽध्याह्रियमाणे वा युष्मदि सत्येव मध्यम इति तथाभूतेऽस्मदि सत्येवोत्तम इति च नियम स्वीक्रियते तदा शेषे प्रथम इति सामान्यशास्त्रेण तयो सतो प्रथमपुरुषोऽपि स्यात्। यदि च तयो सतोर्मध्यमोत्तमावेवेति नियमोऽङ्गीक्रियते तदा शेषेऽपि मध्यमोत्तमौ स्याताम्। तस्मात् शेषग्रहण क्रियते। तथा च शेषे प्रथमपुरुष एवेति नियमात्र

ततो प्रथमपुरुषापत्तिः। एवञ्च तत्र शेषग्रहणवत् अनेकग्रहणस्याप्यावश्यकतया तत्प्रत्याख्यानपरं भाष्यमेकदेश्युक्तं तु सिद्धान्तयुक्तिरिति चेत्—न।

एकत्वाविवक्षायामप्येकवचनसिद्धये तदनेकग्रहणप्रत्याख्यानस्यावश्यकत्वात्। उक्तापत्तिस्तु 'न बहुषु बहुवचनम्, द्वयोर्द्विवचनम्' इत्युभयत्रापि नियमाश्रयणादिति भाष्याशयात्। तथा हि बहुत्वद्वित्वयोरेव बहुवचनद्विवचने इति नियमात् एकत्वे न बहुवचनद्विवचनयोरापत्तिः। तथा बहुत्वद्वित्वयोर्बहुवचनद्विवचने एवेति नियमात् बहुत्वद्वित्वयोरेकवचनापत्तिरपि नेति प्रत्याख्यायते एकग्रहणम्। एवं हि एकत्वस्याविवक्षायामप्येकवचनमुपपद्यते।

यद्यप्येतद्रीत्या द्विविधनियमाश्रयणेन शेषग्रहणमपि प्रत्याख्यातुं शक्यते तथाप्यावृत्तिमन्तरेण द्विविधनियमासम्भवात् युष्मद्युपपदे इत्यादिसूत्रद्वयप्रत्याख्यानापेक्षया शेषग्रहणकरणे एव लाघवम्। प्रकृते तु एकत्वाभावेऽप्येकवचनसिद्धये एकग्रहणाकरणवशकृतमावृत्तिप्रयुक्तं गौरवं सह्यमिति भाष्याशयः।

अत्र घटाः सन्तीत्यत्रैकवचनोपपादनम्

अथैवमेकत्वे एकवचनमित्यर्थाभावे एकवचने एकत्वनिरूपितशक्तिग्रहाभावात् अत्र घटोऽस्तीत्यत्र एकत्वबोधः कथमिति चेत्—लोकत इति गृहाण। लोके हि अत्र घटोऽस्ति न तु घटौ इत्यादिव्यवहारात् एकवचने एकत्ववाचकत्वं गृह्यते। न हि व्याकरणत एव व्याकरणप्रदर्शितः शक्तिग्रह इत्यस्ति नियमः। तृणादेः सङ्ख्यायां, दारलाजादेश्च बहुत्वेऽन्यत एव शक्तिग्रहात्।

तथा चात्र निष्कर्षः लोकव्यवहारात् एकवचनस्य गृहीतैकत्वशक्तिकत्वेन यत्रैकत्वबोधने वक्तुस्तात्पर्यं तत्र तद्बोधो भवति। यत्र त्वनवधानात् भ्रमेण वा बाधेन प्रयोजनविरहाद्वैकत्वं न विवक्ष्यते तत्रैकवचनसत्त्वेऽपि नैकत्वबोधः। यथा भूतले घटोऽस्ति, आकाशो न द्रव्यम्। द्विवचनबहुवचनयोस्तु विवक्षितद्वित्वबहुत्वयोरेवानुशिष्टत्वात्तात्पर्यकत्वेन तद्विरहेण प्रयोग एव नेति घटौ स्त इत्यादिना नियमेन द्वित्वादिबोध इति ॥८॥

औत्सर्गिकैकवचनं सत्येव गमके इति नागेशमतम्

औत्सर्गिकैकवचनं सत्येव गमके भवेत्।
यथाव्ययात्तदुत्पत्तौ लुग्विधिर्गमकः स्थितः।
इति नागेशभट्टेन सिद्धान्तः शेखरे कृतः ॥१४॥

औत्सर्गिकैकवचनविषये नागेशभट्ट आह—एकग्रहणप्रत्याख्यानेऽप्येकवचनमिति महासंज्ञाकरणात् प्रायेणैकत्वे एवैकवचनं ज्ञायते। एकग्रहणप्रत्याख्यानपरभाष्याच्च यत्र किञ्चिद्गमकं तत्रैवैकत्वाविवक्षायां तदुत्पत्तिः। यथाव्ययादुत्पत्तौ अव्ययादाप्सुप इति गमकम्। एवं पचतिरूपं चैत्रः, पचतो रूपं चैत्रमैत्रौ, पचन्ति रूपं चैत्रमैत्रजैत्राः इत्यादौ (प्रशस्तं पचतीत्याद्यर्थके) "प्रशंसायां रूपप्" इतिसूत्रविहितरूपप्प्रत्ययान्ता-द्वेकवचनोत्पत्तौ तत्सूत्रस्थभाष्यप्रयोग एव गमकः। गमकाभावे तु नैवौत्सर्गिकमेकवचन-मिति। भूतले घटोऽस्ति पटोऽस्तीत्यादिप्रयोगास्तु घटत्वपटत्वादिजातिगतैकत्वपरतयो-पपादनीया इति तदाशयः॥५५॥

औत्सर्गिकमेकवचनं सार्वत्रिकमिति दीक्षितादिमतम्

औत्सर्गिकैकवचनं सर्वत्र स्वेच्छया भवेत्।
एकेत्यपाकृतं यस्मादित्याहुर्दीक्षितादयः॥५६॥

प्राचीनैर्भट्टोजिदीक्षितादिभिस्तु औत्सर्गिकैकवचनस्य सार्वत्रिकत्वमङ्गीकृतम्। एतद-नुसारेण भूतले घटोऽस्तीत्यादावेकत्वबोधने तात्पर्याभावादौत्सर्गिकमेकवचनमिति वक्तुं शक्यते। अत्रेदं प्रतिभाति—प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामित्यस्ति व्यु-त्पत्तिः। तत्रार्थशब्देन मुख्य एवार्थः परिगृह्यते। अन्यथा सति तात्पर्ये दण्डीत्यादौ दण्डादावेकत्वान्वयापत्तेः। तस्मात् प्रकृतिमुख्यार्थ एव प्रत्ययार्थान्वयो न तु प्रकृत्यर्थताव-च्छेदके। एवञ्च घट इत्यादौ जातिगतैकत्वपरत्वमेकवचनस्य न युक्तम्। अतस्तत्रैकत्व-मविवक्षितमित्येव सम्यक्। एकवचनं त्वेकत्वबोधाभावेऽपि भवत्येव, एकग्रहणस्य प्रत्या-ख्यानात्। एकवचनमित्यन्वर्थसंज्ञाबलात्तु नैकत्वे एकवचनम् भाष्यानुक्तेः बहुवचन-मित्यादौ बहुष्वित्यादेर्वैयर्थ्यप्रसङ्गात् एकग्रहणप्रत्याख्यानयत्नस्य वैयर्थ्यापाताच्चेति॥५६॥

मैथिली दारा इत्यादिबहुवचनोपपादनम्

नन्वेवमेकत्वाविवक्षायामेकवचनस्य साधुत्वेऽपि बहुत्वाविवक्षायां बहुवचनस्य न साधुत्वम्, बहुत्वे एव बहुवचनमिति नियमस्योक्तत्वात्। एवञ्च—

"नमयति धनुरैशं यस्तदारोपणेन
त्रिभुवनजयलक्ष्मीमैथिली तस्य दाराः॥"

इति जनकप्रतिज्ञावाक्ये दारशब्दात् कथं बहुवचनम्? एकव्यक्तौ बहुत्वाभावेन

तद्विवक्षाया अनंमवादिति चेत्—अत्रोच्यते—

दाराः पुंसि च भूम्न्येवेत्यादिकोशानुसारतः ।
आश्रित्यारोपितां दारप्रभृतौ बहुतां बहोः ।
वचनं साधु भवति दारप्रभृतिशब्दतः ॥५७॥

'दाराः पुंसि च भूम्न्येवे'त्यादिकोपस्य बहुत्ववाचकत्वबोधनद्वारा दारादिशब्दस्य नित्यबहुवचनान्तत्वे एव तात्पर्यात् मैथिली दारा इत्यादावयवगतबहुत्वस्यारोपाद्बहुवचनमुपपद्यते। तथा चोक्तं तदरिष्यमितिसूत्रभाष्यप्रदीपे कैयटेन "सर्वेषां लिङ्गानां सर्वत्र भावात्" केनचिच्छब्देन प्रत्याय्यमानं वस्तु कस्यचिल्लिङ्गस्य व्यञ्जकमिति दारादिषु नियतपुंलिङ्गवचनता सिद्धा। बहुत्वमप्यवयवगतं शक्तिगतं चारोप्यते इति संख्यायोगोऽपि सिद्ध इति।

आरोपे आरोपितस्यापि बहुत्वादेः बहुवचनादिनिमित्तत्वे वा मानन्तु तथा तथा प्रामाणिकप्रयोगाः कोपरूपानुशासनञ्च। तेन बहुत्वारोपाद्दारलाजादिभ्य एव बहुवचनं न तु घटपटादिभ्योऽपीति नातिप्रसङ्गः।

अपि च वास्तविकेऽनादिकालप्रवृत्तारोपविषये वा बहुत्वे बहुवचनं तथाभूते द्वित्वे द्विवचनमिति भगवतः पाणिनेस्तात्पर्यात् मैथिली दारा इत्यादौ बहुवचनं सिद्ध्यति। 'दाराः पुंसि च भूम्न्येवे'त्यादिकोपाणां दारादिपदार्थे बहुत्वारोपस्यानादिकालप्रवृत्तत्वज्ञापने तात्पर्यात्।

अथ तादृशारोपविषयमपि बहुत्वादिकमाश्रित्य बहुष्वित्यादिशास्त्रप्रवृत्तौ पाणिनेस्तात्पर्यं कथमवगम्यत इति जिज्ञासा चेत्—उच्यते। "लुबविशेषे" इति स्वकृतसूत्रप्रत्याख्यापकं "लुब् योगाप्रख्यानात्" इति पाणिनेः सूत्रमेव तथा तात्पर्यमभिव्यनक्ति। तथा हि लुपशास्त्रप्रत्याख्याने "लुपि युक्तवद्व्यक्तिवचने" इति सूत्रस्याप्युद्देश्याप्रसिद्धया प्रत्याख्येयतयाङ्गवङ्गकलिङ्गादीनां बहुवचनान्तानामुपपत्तये आरोपितमपि बहुत्वामाश्रित्य बहुष्वित्यादिशास्त्रप्रवृत्तौ तथा गोदादीनां नित्यद्विवचनान्तानां सिद्धये आरोपितमपि द्वित्वमाश्रित्य द्वयोर्द्विवचनमिति शास्त्रप्रवृत्तौ च पाणिनेस्तात्पर्यमवश्यकल्पनीयमितरथारम्भप्रत्याख्यानपक्षयोः फलभेदेन प्रत्याख्यानासंगतेः। लुपि युक्तवदिति सूत्रसद्भावे लुबन्तेष्वेव लिङ्गवचनयोः सिद्धिः तत्प्रत्याख्याने तु दारलाजादिष्वपीति पाणिनेरभिप्रायः ॥५७॥

नैयायिकमते मैथिली दारा इत्यादौ बहुवचनोपपादनम्

आहुर्नैयायिका दारा भूम्नीत्याद्यनुशासनात् ।
रामस्य दारा इत्यादेः साधुत्वं न बहुत्वधीः ॥५८॥

नैयायिकास्त्वाहुः मैथिली रामस्य दारा इत्यादौ "दाराः पुंसि च भूम्न्येवे"त्यादिनालिङ्गवचनानुशासनाद्बहुवचनस्य साधुत्वं न तु, ततो बहुत्वप्रतीतिर्बाधितत्वात् । बहुवचनाद्बहुत्वबोधो नियत इति तु न वाच्यं, नीला घटा इत्यादौ नीलादिपदोत्तरविभक्त्या संख्याया अप्रत्यायनात् ॥५८॥

विशेष्यवाचिपदतः परवर्तिविभक्तिभिः ।
प्रत्याय्यमाना संख्या हि विशेषणविभक्तिभिः ।
न बोध्यते परं तासां प्रयोगः साधुताफलः ॥५९॥

या हि संख्या विशेष्यवाचकपदोत्तरवर्तिविभक्त्या बोध्यते सा संख्या समानाधिकरणविशेषणवाचकपदोत्तरवर्तिविभक्त्या न प्रत्याय्यते । तदर्थकपदोत्तरविभक्त्या संख्या बोधनेऽभेदसम्बन्धावच्छिन्नविषयताभिन्नतदर्थनिष्ठविषयताशालिशाब्दबोधसामग्र्या अपेक्षणीयत्वात् । न चैवं विशेषणविभक्तेरनर्थकत्वात् किमर्थं प्रयोग इति वाच्यम्, तदसत्त्वे असाधुत्वापत्तिवारणाय तत्प्रयोगस्यावश्यकत्वात् पाक इत्यादौ घञादिवत् पचतीत्यादौ शबादिवच्च । न च रामस्य दारा मैथिलीत्यादौ बहुत्वाबोधे बहुषु बहुवचनमिति शास्त्रविरोधः, तेन हि शास्त्रेण बहुवचनस्य बहुत्वे शक्तिर्बोध्यते 'शक्तिग्रहं व्याकरणोपमाने'त्याद्युक्तत्वात्, न तु नियमेन बहुत्वबोधकत्वमपि बोधस्य योग्यतातात्पर्यज्ञानादिभिर्नियन्त्रितत्वात् । न च बहुत्वाबोधेऽपि बहुवचनस्य साधुत्वे एकस्मिन्नपि घटे सति अत्र घटाः सन्तीति प्रयोगापत्तिरिति वाच्यम्, न ह्येकस्मिन् घटे सति तादृशप्रयोगाभावे बहुवचनासाधुत्वं बीजम्, किन्तु घटा इत्यतो बहूनामेव घटानां लोके बोधोदयेन घटा इत्यादित एकद्व्घटबोधाजननम् ।

अथैवं नीलो नीलौ वा घटा इत्यादिप्रयोगाणां बोधाजनकतयाऽप्रसक्त्या तदभावाय समानवचनत्वनियमकथनं व्यर्थमिति वाच्यम्, वेदाः प्रमाणं, शतं ब्राह्मणा इत्यादौ क्वचिदसमानवचनत्वेऽपि बोधदर्शनेन नीलो घटा इत्यादितो बोध उदयते न वेति संशयनिवर्तनायैव समानवचनत्वनियमकथनस्योपयोगात् ॥५९॥

नैयायिकमते समानवचनतानियमविचारः

अथ यदि समानाधिकरणविशेषणवाचकोत्तरवर्तिनी विभक्तिः साधुत्वार्था न संख्याबोधनार्था तदा नीलो घटा, नीलौ घटा इत्यादयोऽपि प्रयोगाः स्युः। नैष दोषः।

तासां विशेष्यवचनतुल्यानामेव साधुता।
अतश्च न घटा नील इत्यादेः साधुता मता ॥६०॥

समानाधिकरणविशेषणवाचकोत्तरवर्त्तिविभक्तीनां हि विशेष्यवाचकपदोत्तरविभक्तितुल्यत्वे सत्येव साधुत्वमिति नीलो घटा इत्यादौ नीलपदोत्तरविभक्तेर्घटादिपदोत्तरविभक्तितुल्यत्वाभावेन न साधुत्वम् ॥६०॥

नन्वेवं वेदाः प्रमाणं, कलसाः शतमित्यादौ विषमविभक्तीनां कथं प्रयोग इति चेत्? तत्राह—

प्रमाणत्वशतत्वादिगतैकत्वस्य बोधकाः।
वेदाः प्रमाणं कलसाः शतमित्यादयो मताः ॥६१॥

विशेषणवाचकोत्तरविभक्त्या संख्याया अविवक्षितत्वे विशेषणवाचकविशेष्यवाचकयोः समानवचनत्वमेवेति नियमः। यत्र च विशेषणवाचकोत्तरविभक्त्यापि संख्या विवक्षिताऽस्ति तत्र वेदाः प्रमाणं शतं कलसा इत्यादावसमानवचनत्वेऽपि नोक्तनियमभङ्गः। अत्र हि विशेषणवाचकप्रमाणशतायुत्तरवर्त्तिविभक्त्यापि प्रमितिकरणत्वशतत्वादिगतैकत्वसंख्या विवक्षितैवास्तीति।

अत्रेदं तत्त्वम्—विभक्त्यर्थसंख्या प्रायेण प्रकृत्यर्थेऽन्वेति। क्वचित् प्रकृत्यर्थतावच्छेदके, यत्र प्रकृत्यर्थेऽन्वयासंभवः। यथा संपन्नो व्रीहिरित्यत्र व्रीहेर्बहुत्वात् तत्रैकत्वान्वयायोगात् व्रीहित्वे विभक्त्यर्थैकत्वान्वयः। एवं शतं ब्राह्मणा इत्यत्र शतशब्दार्थस्य बहुत्वात् तत्रैकत्वान्वयासंभवात् शतपदार्थतावच्छेदके शतत्वे एव तदन्वयः। नीलो घट इत्यादौ च विशेष्यविभक्त्या संख्यायाः कर्मत्वादेश्च बोधितत्वात् विशेषणविभक्त्या संख्या नैव बोध्यते, नापि कर्मत्वादिकम्, प्रयोजनविरहात्। अतोऽत्रैव समानवचनत्वमपेक्ष्यते। शतं कलसा इत्यादौ त्वेकशतत्वावच्छिन्नबोधाय शतत्वादावेकत्वान्वयः। तत्र च न विशेष्यविशेषणपदयोः समानवचनत्वमपेक्षितम्। तस्मात् साधुतामात्रफलकविभक्त्यन्तस्यैव विशेषणवाचकस्य विशेष्यवाचकोत्तरवचनसमानवचनत्वमावश्यकमिति।

मीमांसकवैयाकरणयोर्मते तु कारकाणां क्रियायामेवान्वय इति सिद्धान्तात् 'नीलं घटमाहरे'त्यादावेकनीलकर्मकमेकघटकर्मकं चानयनमिति बोधः। घटे नीलतादात्म्यप्रत्ययस्तु पाश्चात्यो मानस.। नीलो घट इत्यत्रापि अस्तीत्यस्याध्याहारात् नीलपदार्थस्य च सत्ताक्रियां प्रति कर्तृकारकत्वेनैकनीलकर्तृकैकघटकर्तृका च सत्तेति शाब्दबोधानन्तरं नीलाभिन्नघटज्ञानं मानसं जायते। तस्माद्विशेषणविभक्तिरपि संख्याद्यर्थबोधिकेत्यलम्।

अथ प्रकृतं तार्किकमतं प्रदर्शयामः—

समानवचनत्वनियम·

यत्र विशेषानुशासन नास्ति तत्र समानाधिकरणविशेषणविशेष्यवाचकयाः समानवचनत्वम्। तेन 'नीलौ घट', नीलो 'घटः' इत्यादिप्रयोगा. न साधव, अपि तु नीलो घट, नीलौ घटावित्यादय एव। शतं ब्राह्मणा इत्यत्र तु 'विंशत्याद्याः सदैकत्वे' इति कोषरूपविशेषानुशासनबलादसमवचनत्वेऽपि साधुत्वम्।

नन्वेवं वेदाः प्रमाणमित्यादयः कथं प्रयोगाः? तत्र विशेषानुशासनाभावेन समानवचनत्वावश्यकत्वादिति चेत्—

उच्यते। यत्र विशेषणविभक्त्या संख्या न विवक्ष्यते तत्रैव समानवचनत्वम्। तत्र च समानवचनत्वमेवेत्युभावपि नियमौ। तेन नीलौ घटः इत्यादेर्न साधुत्वं, समानवचनत्वाभावात्। वेदाः प्रमाणमित्यत्र तु विशेषणविभक्त्या प्रमितिकरणत्वगतमेकत्वं विवक्षितमिति हेतोस्तत्र न समानवचनत्वम्। अथ नीलो घटो नीलौ घटावित्यादौ विशेषणवाचकोत्तरविभक्त्या स्वप्रकृत्यर्थगतैकत्वद्वित्वादिसंख्या कुतो न विवक्ष्यते इति चेत्—विशेष्यवाचकोत्तरविभक्त्या तस्या प्रतीत्या पुनर्द्वेधा प्रतीतौ फलाभावात्। विशेष्यपदोत्तरविभक्त्या अप्रतीयमाना संख्या तु प्रयोजनवशात् कचित् विशेषणवाचकोत्तरविभक्त्यापि विवक्ष्यत एव, यथा वेदाः प्रमाणमित्यत्र।

नन्वेतावताऽभेदान्वयस्थले विशेषणवाचकनिष्ठयोरविवक्षितसंख्याकविभक्तिकत्वविशेष्यवाचकसमवचनत्वयोः समनियतत्वं साधुत्वप्रयोजकमित्युक्तं भवति। तथा च पितरो देवता इत्यत्र समानवचनत्वसत्त्वेऽपि अविवक्षितसंख्याकविभक्तिकत्वाभावादविवक्षितसंख्याकविभक्तिकत्वस्य समानवचनत्वव्यापकत्वं दुर्वचमिति चेत्—न। विशेष्यवाचकपदोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्यापरत्वाभाववद्विभक्तिकत्वविशेष्यवाचकपदोत्तरवचनसजातीयवचनत्वयोः परस्परं व्याप्यव्या-

एकमात्रनैयत्यमित्यर्थस्य विवक्षितत्वात्। एवञ्चाविवक्षितसंख्याकविभक्तिकत्वस्य समानवचनत्वाव्यापकत्वेऽपि विरुद्धसंख्यापरत्वाभाववद्विभक्तिकत्वस्य समानवचनत्वव्यापकत्वमक्षतमेव। विरुद्धत्वं हि स्वावृत्तिसंख्यात्वव्याप्यधर्मवत्त्वमिति भिन्नमपि बहुत्वं न बहुत्वविरुद्धम्, अपि तु द्वित्वादिकमेव, तस्य बहुत्वावृत्तिसंख्यात्वव्याप्यद्वित्वत्वादिजातिमत्त्वात्। एवञ्च पितरो देवता इत्यत्र समानविभक्तिकत्वाधिकरणे देवतापदे विशेष्यवाचकपितृपदोत्तरजस्विभक्तितात्पर्यविषयबहुत्वसंख्याविरुद्धद्वित्वादिसंख्यापरत्वाभाववद्विभक्तिकत्वस्यापि सत्त्वात्तस्य समानवचनत्वव्यापकत्वमव्याहतमेव। तथा चोक्तं व्युत्पत्तिवादे "यत्र विशेषणवाचकोत्तरविभक्त्या विशेष्यवाचकोत्तरविभक्तितात्पर्यविषयसंख्याविरुद्धसंख्याया अविवक्षितत्वं तत्र विशेष्यवाचकोत्तरवचनसमानवचनत्वमि"ति। अत्र हि विरुद्धान्तविशेषणोपादानात् अविवक्षितसंख्याकविभक्तिकत्वधर्मेऽपि समानवचनत्वव्यापकत्वमभिमतम्। समानवचनत्वमात्रस्य व्यापकत्वाभिप्राये तु विरुद्धान्तविशेषणस्य वैयर्थ्यापत्तेः। व्याख्यातं चैवमेव व्युत्पत्तिवादगूढार्थतत्त्वालोके सर्वतन्त्रस्वतन्त्रमैथिलधर्मदत्तेन।

नन्वेवमपि समानवचनत्वस्याविवक्षितविरुद्धसंख्याकविभक्तिकत्वव्यापकत्वं नास्ति रामस्य मैथिली दारा इति दारशब्दे तादृशविभक्तिकत्वाधिकरणे समानवचनत्वाभावादिति चेत्—एवन्तर्हि तादृशविभक्तिकत्वव्यापकत्वघटकाधिकरणे नियतवचनभिन्नत्वं निवेशनीयम्। तथा चाविवक्षितविरुद्धसंख्याकविभक्तिकत्वनिष्ठाधेयतानिरूपितानियतवचनकनिष्ठाधिकरणतावद्वृत्त्यत्यन्ताभावाप्रतियोगित्वमेव तादृशविभक्तिकत्वव्यापकत्वं समानवचनत्वस्येति न व्यापकत्वभङ्गः। एवं तत्रैव क्रियाविशेषणबोधकातिरिक्तत्वमपि निवेशनीयमिति स्तोकं पचतीति क्रियाविशेषणवाचकस्तोकादिपदमादाय न व्यापकत्वभङ्गः। अत्र समानवचनत्वनियमानुरोधेन द्विवचनबहुवचनयोरापत्तिस्तु न क्रियाविशेषणस्य कर्मत्वे तद्वाचकस्यैकवचनान्ततैवेति नियमात्।

नन्वेवं सुन्दरो दाराः इत्यस्य साधुत्वापत्तिः, न्यायनये अप्रसिद्धप्रतियोगिकाभावानभ्युपगमेनोक्तनियमाविषयत्वात्। तथा हि तत्र विशेष्यबोधकं दारपदं तदुत्तरवर्तिजस्विभक्तेः साधुत्वमात्रार्थतया तात्पर्यविषयसंख्याया अभावेन तद्विरुद्धसंख्यात्वप्रत्याभाववद्विभक्तिकत्वस्य विशेषणवाचकसुन्दरशब्दे सुतरां वक्तुमशक्यत्वादिति चेत्—न। यत्र विशेषणबोधके विशेष्यबोधकोत्तरविभक्त्यसमानत्वं तत्र विशेष्यवाचकपदोत्तरवचनसमानवचनत्वमित्येवं नियमस्य वाच्यत्वात्, अभावीयप्रतियोगितावच्छेदकसम्बन्धस्य स्वतात्पर्यविषयसंख्याविरुद्धसंख्यापरविभक्तिमत्त्वघटितत्वरूपस्योपादे-

यमानत्वात्। प्रतियोगितावच्छेदकसम्बन्धस्य यत्र कुत्रचित् प्रसिद्धयपेक्षणात्। उक्त-प्रतियोगितावच्छेदकसम्बन्धस्य नीलो घट इत्यादौ प्रसिद्धया तत्सम्बन्धावच्छिन्न-प्रतियोगिनाकस्य विशेष्यवाचकदारपदोत्तरविभक्तयभावस्य विशेषणवाचकसुन्दरपदे सत्त्वादुक्तनियमाक्रान्तत्वेन नोक्तापत्तिः। तत्र समानवचनत्वमित्यस्य समानवचनत्वे सत्येव साधुत्वमन्यथात्वसाधुत्वमित्यर्थपर्यवसानात् सुन्दरा दाराः, नीलो घटः, पितरो देवताः, शत ब्राह्मणाः, वेदाः प्रमाणमित्यादिप्रयोगाणां साधुत्वम्, नीलो घटाः, सुन्दरो दारा इत्यादेरसाधुत्वं च लभ्यते।

वस्तुतस्तु समानवचनत्वनियमे संख्यायां विशेष्यवाचकोत्तरविभक्तितात्पर्यविषय-संख्याविद्धत्वविशेषणं न देयं फलाभावात्। किन्तु यस्माद्विशेषणवाचकात्परया वि-भक्त्या संख्या न विवक्ष्यते तत्र विशेष्यवाचकोत्तरवचनसमानवचनत्वमित्येव नियमो वाच्यः। वेदाः प्रमाणं, शतं ब्राह्मणा इत्यादौ विशेषणवाचकोत्तरसुविभक्त्या प्रमाणत्व-शतत्वादिगतैकत्वसंख्या विवक्षितेति नियमाविषयतया तत्र समानवचनत्वाभावेऽपि नासाधुता नीलो घटः, सुन्दरा दारा इत्यादौ तु नियमाक्रान्त्या समानवचनत्वमेव। नियमाकारस्तु यस्माद्विशेषणवाचकात्परया विभक्त्या संख्या न विवक्ष्यते तत्र विशे-षणवाचके समानवचनतैवेति न तु तत्रैव समानवचनतेति। तेन पितरो देवता इत्यत्र विशेषणवाचकदेवतापदोत्तरजसुविभक्त्या संख्याया विवक्षितत्वेऽपि समानवचनता न नियमविरुद्धा। अत्र संख्यापरत्वशून्यविभक्तिकत्वं व्याप्यं समानवचनत्वं च व्याप-कमिति लभ्यते, व्यापकाभावस्य च व्याप्याभावप्रयोजकतया नीला घट इत्यत्र नील-पदे समानवचनत्वरूपव्यापकधर्माभावेन संख्यापरत्वशून्यविभक्तिकत्वरूपव्याप्यधर्मा-भावनिश्चयात् संख्यापरविभक्तिकत्वावगत्या एकस्मिन् घटे बहुत्वाभावेन तद्विवक्षाया असंभवात् नीला घट इति न प्रयोगः। न चैवं मैथिली दारा इत्यादौ नियमभङ्ग इति वाच्यम्, गदाधरोक्तनियमेऽपि तुल्यत्वात्। यदि च तदुक्तनियमवाक्ये विशेषणवाचके नियतवचनभिन्नत्वनिवेशान्न दोष इत्युच्यते, तर्हि मदुक्तनियमवाक्येऽपि तथा निवेशा-द्दोषाभावस्तुल्य एव। तत्र समानवचनत्वमित्यस्य तत्र समानवचनत्वे सत्येव प्रामाण्य-मन्यथात्वप्रामाण्यमित्यर्थपर्यवसानात् नीला घट इत्यादयो न प्रयोगाः इति।

अथ विवक्षाविवक्षयोर्वक्त्रधीनतया सुन्दरशब्दोत्तरसुविभक्त्या एकत्वविवक्षाया-मेकस्यां योषिति सुन्दरो दारा इति प्रयोगापत्तिः, नैष दोषः। विवक्षा हि तात्पर्यापरपर्याया क्वचिद्वक्तुः स्वतन्त्रता, क्वचित्तु नियन्त्रिता। यथा हि विशेष्यवाचकोत्तरविभक्त्या स्व-प्रकृत्यर्थगतसंख्याविवक्षा विशेषणवाचकोत्तरविभक्त्या तदर्थगतसंख्याविवक्षां निय-

च्छति । तथा विशेष्यवाचकोत्तरविभक्त्या संख्याविवक्षाविरहेऽपि विशेषणबोधकोत्तरविभक्त्या संख्याविवक्षामवरुणद्धि । तथा च सुन्दरा दारा इत्यत्र विशेष्यसमर्पकदारशब्दात् परया जस्विभक्त्या संख्याविषयाभावात् सुन्दरशब्दोत्तरविभक्त्यापि संख्याया अविवक्षैवेति सुन्दरा दारा इत्यस्यैव साधुत्वम्, न तु सुन्दरो दारा इत्यस्य प्रागुक्तनियमविरोधात् ।

नियमान्तरकथनम्

अथैवमपि विशेष्यवाचकघटादिपदोत्तरसुविभक्तेर्घटत्वादिजातिगतैकत्वपरत्वे विशेषणवाचकनीलादिपदोत्तरजसुविभक्तेश्च नीलव्यक्तिगतबहुत्वपरत्वे नीला घट इत्यादिवाक्यानां साधुत्वापत्तिः उक्तसमानवचनत्वनियमानाक्रान्तत्वादिति चेत्—न विशेष्यवाचकोत्तरविभक्तेर्जात्यैक्यपरत्वे विशेषणवाचकस्याप्यैक्यवचनान्तत्वैवेति नियमान्तरस्यापि स्वीकरणीयत्वात् । एतेन वेदत्वगतैकत्वविवक्षायां वेदः प्रमाणानीति प्रयोगापत्तिरपि निरस्ता ॥६१॥

गावो धनमित्याद्येकवचनोपपत्तिः

अथैवमुक्तनियमविरोधात्

"या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे" ॥

इत्यभियुक्तोक्तिविरोधाच्च "पञ्च गावो धनं यस्य स पञ्चगवधनः" इति कौमुदीप्रयोगासंगतिः । धनशब्दस्य नित्यनपुंसकतया विशेष्यलिङ्गमाकुलाभावेऽपि विशेष्यगतबहुत्वसंख्याबोधकबहुवचनविभक्तिकत्वावश्यकत्वादिति चेत्—अत्रोच्यते—

विशेष्यवाचके द्वित्वबहुत्वार्थविभक्तिके ।
विशेष्यवाचितो भिन्नलिङ्गाज्जातेरवाचकात् ॥६२॥
विशेषणपराच्छब्दात्परत्र समवस्थितम् ।
औत्सर्गिकैकवचनमपि साधु मतं विदाम् ॥६३॥

अयमर्थः । विशेष्यवाचके द्वित्वसंख्यावाचिविभक्तिके बहुत्ववाचिविभक्तिके वा सति विशेष्यवाचकतो भिन्नलिङ्गात् जातेरवाचकाच्च विशेषणवाचकशब्दात् परत्रामे स्थितम्

औत्सर्गिकमेकवचनमपि विदां विदुषां महाभाष्यकारादीनां साधुत्वेन संमतम्। एवञ्च या विशेष्येषु दृश्यन्ते इति न्यायस्य चैतदतिरिक्तविषयकत्वेन संकोचनीयतया पञ्च गावो धनमिति प्रयोगोऽपि साधुः। बहुत्वविवक्षायान्तु पञ्च गावो धनानीत्यपि साधुरेव।

अत्र मानन्तु "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" "इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि" "अव्ययीभावस्याव्ययत्वे प्रयोजनं लुग्मुखस्वरोपचाराः" "नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तमिमौ द्विर्वचनस्य" "न चास्ति सप्तमी ईदृशी, इत्यादिमहाभाष्यप्रयोगाः "भिन्नाः क्रियाः संकलनाबुद्ध्यानुसंधीयमाणाश्चिरक्षिप्रादिव्यपदेशस्य निमित्तं भवन्ती"ति हेलाराजप्रयोगश्च—

"उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" ॥

"प्रज्ञोत्साहावतः स्वामी यतेताधातुमात्मनि।
तौ हि मूलमुदेष्यन्त्या जिगीषोरात्मसंपदः" ॥

इत्यादयो महाकविप्रयोगाश्च। एवञ्च तौ मूलम्, उपकारापकारौ लक्षणमित्यादिष्विव पञ्च गावो धनमित्यत्र विशेषणवाचकवनपदस्य विशेष्यवाचकगोपदात् भिन्नलिङ्गकत्वेन जातिवाचकभिन्नत्वेन चैकवचनान्तता नासंगता। "घटपटौ पदार्थः" घटपटौ पृथिवीत्यादिप्रयोगाणां साधुत्ववारणाय भेदघटितविशेषणद्वयोपादानम्।

या विशेष्येषु दृश्यन्ते इत्यस्यावशिष्टं व्याख्यानम्

एवञ्च या विशेष्येषु दृश्यन्ते इत्यत्र विशेषणपदे विशेष्यलिङ्गभिन्नलिङ्गकत्वजातिवाचकेतरत्वैतदुभयधर्मवद्भिन्नत्वेन संकोचः प्रायोग्रहणात्। इत्थं च अमात्याः प्रधानम्, वेदाः प्रमाणम्, स्वौजसः प्रथमा विभक्तिः, इत्यादयोऽपि प्रयोगाः। अथ च अमात्याः प्रधानानि, वेदाः प्रमाणानि, स्वौजसः प्रथमा विभक्तयः, इत्यादयोऽपि। एवं काशीवासे धर्मावाप्तिविद्वत्संगविचित्रप्रसादाः प्रयोजनं प्रयोजनानि वा इत्युभयं साधु। एतेनोक्तप्रयोगा आर्षा इत्यपास्तम्। कादम्बर्यां 'तत्र भवन्तः प्रमाणम्, मालविकाग्निमित्रे 'आर्यमिश्राः प्रमाण'मित्यादिप्रयोगदर्शनेन तथाविधप्रयोगाणामनार्षसाधारणत्वात्।

एवं जगन्नाथकृतभामिनीविलासेऽपि तथा प्रयोगो दृश्यते—

"दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः
करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः ।
इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं
नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः" ॥

एवमन्येपि तादृशनियमानुसारिणो बहवः प्रयोगाः । न चास्माभिस्तादृशतादृशमहाभाष्योदीरितप्रयोगबलादेव तादृशनियमः स्वीकर्तव्य इत्युच्यते, अपि तु हेलाराजकालिदासमाघजगन्नाथादिविद्वत्प्रकाण्डप्रयोगबलादपि । न च हेलाराजादिप्रयोगाणामार्षत्वं वक्तुं शक्यम्, नाप्यसाधुत्वमेव । महाभाष्येऽपि तथा प्रचुरप्रयोगदर्शनात् ।

किञ्च आर्षत्वात् साधुत्वं शब्दानुशासनानभियुक्तव्यासादिमुनिकृतप्रयोगेष्वेव वाच्यम्, न तु शब्दशास्त्रप्रवृत्तमुनिकृतप्रयोगेषु । यतस्तत्कृतप्रयोगबलात् तदनुसारिप्रयोगाणां सर्वत्र साधुत्वमिष्यत एव । 'यथा अपरस्पराः क्रियासातत्ये' इति पाणिनिना प्रयुक्तत्वात् सततशब्दस्य सर्वत्र साधुता । समर्थसूत्रे महाभाष्यकृतोद्गातार इति प्रयुक्तत्वात् उद्गातारावुद्गातार इत्यादेः साधुत्वम् ।

न चैव'मूकालोऽज्झस्वदीर्घप्लुत' इति पाणिनिकृतस्य समाहारे पुंलिङ्गप्रयोगस्य बलात् अन्यत्रापि समाहारद्वन्द्वे पुंलिङ्गत्वापत्तिरिति वाच्यम्, "स नपुंसक"मिति शास्त्रेण साक्षादस्य नपुंसकत्वकथनेन तद्विरोधात् । तत्र सौत्रं पुंस्त्वमित्येव वक्तुं युक्तत्वात् ।

न च "बन्धुनि बहुव्रीहा"विति नपुंसके पाणिनिना बन्धुशब्दस्य प्रयुक्तत्वात् चैत्रो मम बन्धु इत्यस्यापि साधुत्वं स्यादिति वाच्यम्, न हि तत्र बान्धवपरत्वेन बन्धुशब्दः प्रयुक्तः, अपि तु बन्धुशब्दपरत्वेनेति विभेदादित्यलम् ।

रामस्य सुन्दरा दारा इत्यादौ सुन्दरादिपदाद् बहुवचनोपपत्तिः

अथ—"रामस्य सुन्दरा दारा भीषणान् दण्डकान् ययुः" इत्यादौ दाराः दण्डकान् इत्यादिबहुवचनस्य "दाराः पुंसि च भूम्न्येवे"त्यादि कोषरूपानुशासनादारोपितबहुत्वमाश्रित्य साधुत्वेऽपि तत्र सुन्दराः भीषणान् इत्यादि बहुवचनस्य कथं साधुत्वम् ? तत्रारोपितं बहुत्वमाश्रित्य "बहुषु बहुवचन" मिति शास्त्रप्रवृत्तौ मानाभावात्, अन्यथैकघटदेशेऽपि अत्र घटाः सन्तीति प्रयोगापत्तेः । न च

"या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।
प्रायस्ता एव कर्तव्याः समानार्थे विशेषणे ॥"

इयुक्तत्वात् तस्य साधुत्वमिति वाच्यम्, अस्य श्लोकस्य शास्त्रत्वाभावेन साधुत्वव्यवस्थापकत्वे मानाभावात्। किञ्चैवमपि तत्र "ययु"रिति बहुवचनस्य साधीयस्त्वमनुपपन्नमेव। एवं "दण्डका पुरा मुनिभिरध्यासा चक्रिरे" इत्यादिकर्मतिङ्बहुवचनस्याप्यनुपपत्ति। वैयाकरणमते तिङर्थकर्तृकर्मणो क्रियाया साक्षाद्विशेषणत्वेन दारदण्डकादिकं प्रति विशेषणत्वाभावाद्या'विशेष्येषु दृश्यन्ते' इत्यस्याप्यविषयत्वात्। अत्रोच्यते—स्वार्थद्रव्यलिङ्गसंख्याकारकाणां नामार्थत्वं सिद्धान्तयित्वा "बहुषुबहुवचन"मित्यादिशास्त्राणां बहुत्वादिद्योतकानि बहुवचनादीनि भवन्ति तानि च साधूनीत्यर्थं स्वाक्रियते शाब्दिकैः। तदर्थद्योतकत्वं च तदर्थविषयकतात्पर्यग्राहकत्वम्। अर्थशब्देन च द्योयोऽप्यर्थं परिगृह्यते इति बहुत्वादावर्थे बहुवचनादीति व्यवहारो नासंगत। एवञ्च यथा द्वौ ब्राह्मणावित्यत्र द्वित्वस्य सकृदेव भान, द्विपदार्थब्राह्मणपदार्थयोरैक्येन द्विपदार्थगत द्वित्वस्य द्वाभ्यामपि द्विवचनाभ्यां द्योतनात् प्रकरणसाहचर्यादीनां प्रत्येकं यथासमवमिलितानां च तात्पर्यग्राहकत्वदर्शनात्। तथा सुन्दरा दारा इत्यत्र दारा इति विशेष्य पदे शास्त्रसिद्धबहुत्वद्योतकबहुवचनस्यावश्यकत्वेन तत्प्रकृत्यर्थे आरोपितबहुत्वभाने नियते सुन्दरादिपदोत्तरविभक्तेरपि तादृशबहुत्वद्योतिकाया एव प्रवृत्ते, अपदस्य प्रयोगानर्हत्वात्। एवं दारा ययुरित्यत्र दारपदार्थरूपे कर्तरि लकारविधानेन कर्तृपदे बहुत्वद्योतकबहुवचनस्यावश्यकतया लकारस्थानेऽपि तद्बहुत्वद्योतकबहुवचनस्य प्रवृत्ते लिङ्सुब्बहुवचनाभ्यामेकस्यैव बहुत्वस्य द्योतनात्। एवं दण्डका अध्यासाचक्रिरे इत्यादावपि बोध्यम्।

तदेतत्सकलमभिप्रेत्यैव "या विशेष्येषु दृश्यन्ते" इति पद्यमुक्तमभियुक्तै। अस्य व्याख्यानं तु लिङ्गविचारप्रकरणे एव कृतं द्रष्टव्यम्। तत्रानुक्तमिदानीमुच्यते

### चैत्रो मैत्रश्च गच्छत इति विभिन्नवचनतोपपत्ति

'या विशेष्येषु दृश्यन्ते" इत्यादिनियमे चैत्रो मैत्रश्च गतौ, चैत्रमैत्रौ भवदत्तश्च गतवन्त इत्यादिषु व्यभिचार। तद्वारणाय यत्रैकमेव विशेष्यसमर्पकपदं तत्रैवोक्तनियम इति व्याख्येयम्। तथा च नियमवाक्यघटकविशेषणपदे विशेष्यवाचकविशिष्टत्व निवेश्यम्। वैशिष्ट्यं च स्वप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्वेतरपदप्रयोज्यविशेष्यतानिरूपितप्रकारत्वाप्रयोजकत्वोभयसम्बन्धेन। चैत्रो मैत्रश्च गतावित्यत्र विशेष्यवाचकं चैत्र इति मैत्र इति च तयो किमप्येकमादाय तद्विशिष्टं गताविति विशेषणं न भवति, वैशिष्ट्यनियामकप्रथमसम्बन्धसत्त्वेऽपि द्वितीयसम्बन्धविरहात्।

तिङन्तेऽपि समानवचनता

अपि च "या विशेष्येषु दृश्यन्ते" इति नियमो न केवलं सुबन्तार्थस्य विशेष्यत्वे एव, अपि तु आख्यातार्थस्य विशेष्यत्वेऽपि। अत एव सुप्तिङ्साधारणवाचकं विभक्तिपदमुपात्तम्। तत्राख्यातवाच्यकर्तृकर्मणोर्लिङ्गयोगाभावात् लिङ्गांशे उक्तन्यायाप्रवृत्तावपि संख्यांशे प्रवृत्त्या ब्राह्मणः पचति, ब्राह्मणौ पचतः, ब्राह्मणाः पचन्ति। तण्डुलः पच्यते, सूपतण्डुलौ पच्येते, सूपतण्डुलव्यञ्जनानि पच्यन्ते इत्यादिषु समानवचनता। एतन्नियमवशात् "ब्राह्मणः पचन्ती"त्यादिप्रयोगाणामसाधुत्वं लभ्यते। अन्यथा नामार्थमाख्यातार्थे संख्याया अन्वयाद्यौत्सर्गिकैकवचनशालिनस्तादृशप्रयोगा आपद्येरन्।

एष च नियमः आख्यातविषये यत्रैकैव समानाधिकरणविशेष्यवाचकं तत्रैव। तेन चैत्रो मैत्रश्च पचतः, चैत्रमैत्री जैत्रश्च पचन्ति इत्यादौ नियमानाक्रान्तत्वेन समानवचनत्वाभावेऽपि न क्षतिः।

नन्वेवं ब्राह्मणाः क्षत्रियाश्च पचतीत्यादिप्रयोगापत्तिः, विशेषणवाचकानेकत्वेनोक्तन्यायाविषयत्वात्। तिङेकवचनस्य चौत्सर्गिकत्वेन साधुत्वादिति चेत्, एवं तर्हि समानाधिकरणानेकवि[illegible]वाचके सति धातोः परमौत्सर्गिकैकवचनं नैव प्रयोज्यमिति नियमान्तरमपि स्वीकरणीयमिति।

इदन्तु बोध्यम्—शाब्दिकमते कर्ता कर्म च तिङर्थः। तत्राभेदेन ब्राह्मणतण्डुलादेर्विशेषणता। कर्तृकर्मणोश्च यथायथं क्रियायामन्वयः। सा च शाब्दबोधे मुख्यविशेष्या। तथा च ब्राह्मणः पचतीत्यत एकब्राह्मणाभिन्नैककर्तृनिष्ठा वर्तमाना पाकक्रियेतिबोधः। एवं पच्यते तण्डुल इत्यतः एकतण्डुलाभिन्नैककर्मवर्तिनी क्रियाजन्या विक्लित्तिरितिबोधः। एतन्मतानुसारेण चैत्रतण्डुलादीनां तिङन्तार्थसमानाधिकरणविशेषणत्वमिति तन्मतानुसारिण्येवोक्तव्यवस्था बोध्या। नैयायिकास्तु प्रथमान्तार्थमुख्यविशेष्यकं बोधं मन्यन्ते। तन्मतानुसारेण चैत्रः पचतीत्यादितः विक्लित्त्यनुकूलव्यापारानुकूलकृतिमांश्चैत्र इत्यादिर्बोधः। तथा च तेषां मते चैत्रादेः समानाधिकरणविशेषणत्वाभावात् तिङन्ते "या विशेष्येषु" इति नियमानाक्रान्त्या नियमान्तरं वाच्यम्। तद्यथा मुख्यविशेष्यवाचकं यद्वचनकं तत्समानवचनकमेवाख्यातमिति। एतदपि यत्रैकमेव मुख्यविशेष्यवाचकं तत्रैव। तेन चैत्रो मैत्रश्च गच्छत इत्यादौ विभिन्नवचनस्यापि तिङन्तस्य साधुत्वमिति दिक्।

नील घट इति प्रयोगाभावे हेतु

अथैवमपि नीलत्वावच्छिन्नस्य विशेष्यत्वे नीलं घट इति प्रयोगापत्तिः। "या विशे-

ष्येषु दृश्यन्ते" इति नियमस्य विशेष्यनिम्नविशेषणवाचकविषयत्वात् घटपदस्य च विशेष्यनिम्नत्वाभावादिति चेत्—अत्रोच्यते—

विशेषणमभेदेन नील एव घटे भवेत् ।
न तु नीलं प्रति घटः कदापि स्याद्विशेषणम् ॥६४॥
तस्मान्नीलपदार्थस्य घटं मत्वा विशेषणम् ।
न नीलं घट इत्यादिः प्रयोगः साधुरिष्यते ॥६५॥

घटादिपदार्थं प्रति नीलादिपदार्थस्य विशेषणत्वमेवेति सिद्धान्तात् विपरीतविशेष्यविशेषणभावस्यासंभवात् न नीलं घट इत्याद्यापत्तिः । अत एव नीलघट इत्यादय एव समासाः, न तु घटनील इत्यादयः । अन्यथा "विशेषणं विशेष्येणे"ति शास्त्रेण कदाचित् घटनील इत्यादिरपि समासः स्यात् । उक्तं चैतत् पूर्वमपि ॥६४-६५॥

विशेष्यविशेषणभावनियमः

विशेष्ये जातिसंज्ञे द्वे क्रियायाश्च गुणस्य च ।
विशेष्या व्यापिका जातिर्व्याप्यजातिर्विशेषणम् ॥६६॥
विशेषणविशेष्यत्वे ऐच्छिके क्रिययोर्द्वयोः ।
गुणयोश्च तथा स्यातां क्रियायाश्च गुणस्य च ॥६७॥

तदुक्तं "विशेषणं विशेष्येणे"ति सूत्रे शब्देन्दुशेखरे

(१) जातिसंज्ञयोर्गुणक्रियासमभिव्याहारे विशेष्यतैव ।

(२) गुणयोः क्रिययोर्गुणक्रिययोश्चानियम एव ।

(३) व्याप्यव्यापकभावानापन्नजात्योरप्येवं यथा भूतमूर्तयोः ।

(४) तद्भावापन्नयोस्तु व्यापकस्य विशेष्यतैव, यथा शिंशपावृक्ष इति ।

अत्रायमाशयः—यद्यपि नीलमुत्पलमित्यत्र यथा नीलमनीलादुत्पलाद्व्यावर्तयति तथोत्पलमप्यनुत्पलान्नीलाद्व्यावर्तयतीति व्यावर्तकत्वरूपं विशेषणत्वमुभयोः संभवति, तथापि शब्दस्वभावात् जातिशब्दः संज्ञाशब्दश्च गुणक्रियाशब्दसमभिव्याहारे विशेष्यसमर्पक एव भवति । विशेष्यता च बोधीयसम्बन्धानुयोगितासमानाधिकरणधर्मविशेषः । तेन नीलोत्पलं, पाचकब्राह्मणः, पट्टुदेवदत्तः, पाचकदेवदत्तः, एवमेव समासो भवति न तु तद्विपरीतः ।

गुणयोस्तु विशेष्यविशेषणभावो न नियतः, अपि त्वैच्छिकः। तेन कुब्जखञ्जः खञ्जकुब्ज इत्युभयं भवति।

एवं क्रिययोरपि विशेषणविशेष्यभावो न नियतः। तेन पाचकश्चासौ पाठकश्चेति विग्रहे पाचकपाठकः पाठकपाचक इत्युभयमपि साधु।

एवं गुणशब्दक्रियाशब्दार्थयोरपि न स नियत इति खञ्जपाचकः पाचकखञ्ज इति द्विविधोऽपि इच्छया प्रयोगः।

तथा ययोर्जात्योर्न व्याप्यव्यापकभावः अर्थात् कचित्सामानाधिकरण्यं क्वचिद्वैयधिकरण्यं च तादृशजातिवाचकवाच्ययोरपि न स नियत इति भूतमूर्तो मूर्तभूत इत्युभयं भवति। साङ्कर्यस्य जातिबाधकत्वानुपगमेन भूतत्वमूर्तत्वयोरपि जातित्वात्। नैयायिकैस्तु तस्य जातिबाधकत्वस्वीकारात्। तन्मतानुसारेण संकीर्णधर्मावच्छिन्नवाचकवाच्ययोर्न स नियत इति वाच्यम्। अथ वा तथाभूता गुणशब्द एवेति पार्थक्येन वाच्यमेव न, गुणशब्देन जातिक्रियाभिन्नधर्ममात्रग्रहणात्।

व्याप्यव्यापकभावापन्नजातिवाचकवाच्ययोस्तु व्यापकजातिवाचकवाच्यस्य विशेष्यत्वं 'तेन शिंशपावृक्षः, मसूरिकान्नम्', इत्यादिरेव प्रयोगः नतु वृक्षशिंशपा, अन्नमसूरिकेत्यादिरिति ॥६६-६७॥

इदं घट इत्यादिप्रयोगाः कुतो न ?

अथ इदमाद्यर्थस्य विशेष्यत्वात् इदं घटः, एत पटः, इदमाप इत्यादयः प्रयोगाः कुतो न ? घटादेः स्वतन्त्रलिङ्गतया 'या विशेष्ये' इतिन्यायविषयाभावात्। न चाभेदान्वयस्थले त्यदाद्यर्थस्य विशेषणत्वमेव। अत एव तद्घटमानय, एतद्घटोपनीयतामित्येव प्रयोगो न तु घटतमानय, घटैपोपनीयतामिति वाच्यम्, परमसः परमयूयमित्यादिप्रयोगाणां साधुत्वस्य वैयाकरणैः स्वीकृततया त्यदाद्यर्थस्य विशेषणत्वेति नियमस्य वक्तुमशक्यत्वादिति चेत्—अत्रोच्यते—

त्यदादयो विशेष्यार्थपरा ये वाक्यवर्तिनः।
विशेषणस्य लिङ्गं च वचनं च भजन्ति ते ॥६८॥

त्यदादिकिमन्ताः सर्वनामशब्दा यदि समानाधिकरणविशेष्यपरत्वेन प्रयुज्यन्ते तदा विशेषणस्य लिङ्गं वचनं चाश्रयन्ति शब्दस्वभाववैचित्र्यात्। अतः अयं घटः, इदं वसनम्, इमा आप इत्यादय एव प्रयोगाः सम्भवा, न तु इद घट इत्यादयः। अत एव

"भविष्यन्ति शरण्यानां शरण्या दण्डका इमे" इति खरं प्रति रामवाक्ये इमे इति संगच्छते। संगच्छन्ते च "इमा आपो मया भक्त्या तव पादतलेऽर्पिता" इत्यादाविमा इत्यादयः ॥६८॥

नारीणां स्तनावित्यादौ द्विवचनोपपत्तिः

"मृदौ काव्ये कश्चिद्भजति यदि भागः कठिनतां
न वैरस्याय स्यादपि तु परितोषाय विदुषाम्।
शरीरे नारीणां परमसुकुमारत्वभरिते
कठोरौ वक्षोजौ तरुणजनचेतांसि हरतः" ॥

इति मदीये रसिकमनोरञ्जिनीपद्ये वक्षोजाविति द्विवचनस्य कथं साधुत्वं ? नारीणां बहुत्वेन तदीयशरीरबाहुल्यात्तत्र स्थितानां वक्षोजानामपि बहुत्वेन द्वित्वाभावात्। शरीरे इत्येकवचनं तु औत्सर्गिकत्वेन संख्यानपेक्षणात् शरीरत्वगतैकत्वपरत्वाद्वोपपद्यते। एवम्—

"प्रकाशकार्कश्यगुणौ दधानाः
स्तनौ तरुण्यः परिवव्रुरेनम्" ॥

इति माघपद्येऽपि स्तनाविति द्विवचनानुपपत्तिः। न च द्विवचनोपस्थापितनानाद्वित्वानां नानावक्षोजान्वयितया द्विवचनोपपत्तिरिति वाच्यम्, एवं हि चतुर्षु ब्राह्मणेषु भुञ्जानेषु ब्राह्मणौ भुञ्जाते इति प्रयोगापत्तेरिति चेत्—अत्रोच्यते—

वक्षोजनयनादीनि नित्यद्विवचनान्यपि।
अतः प्रायो बहुत्वेऽपि तेषां द्विवनान्तता ॥६९॥

वक्षोजनयनस्तनलोचनादिशब्दा द्विविधाः—केवलवक्षोजादिवाचकाः वामदक्षिणोभयवक्षोजादिवाचकाश्च। तत्राद्या अनियतवचनाः। अन्त्यास्तु नित्यद्विवचनान्ताः पुष्पवन्तशब्दवत्। तत्र द्विवचनोपात्तद्वित्वस्य प्रकृत्यर्थैकदेशवामत्वदक्षिणत्वजात्योरेवान्वयो व्युत्पत्तिवैचित्र्यात्। वामत्वदक्षिणत्वे च वक्षोजनयनकपोलश्रवणकरचरणादिगते अनुगतसंस्थानव्यङ्ग्ये जाती तटत्वादिजातिवत्। एतेन

"श्रवसोः कुवलयमक्ष्णो रञ्जनमुरसो महेन्द्रमणिदाम ।
वृन्दावनतरुणीनां मण्डनमखिलं हरिर्जयति" ॥

इत्यादौ श्रवसोरक्ष्णोरित्यादिद्विवचनमपि व्याख्यातम् । यदि तु वामत्वादिर्न जातिरपि तु वामभागावस्थितत्वमित्युच्यते तदा वक्षोजनयनादिशब्दा वामत्वदक्षिणत्वोपलक्षितजातिविशेषद्वयविशिष्टवाचका अपीति जातिद्वयगतद्वित्वेन द्विवचनान्तत्वोपपत्तिः । यदाह वामनः "स्तनादीनां द्वित्वविशिष्टा जातिः प्रायेणे"ति ॥६९॥

शब्दाः केचिन्नित्यबहुवचनान्तास्तथा पुनः ।
केचिन्नित्यद्विवचना नित्यैकवचना अपि ॥७०॥

अथाधुना नित्यबहुवचनान्तादीनां लक्षणान्युच्यन्ते । तत्र तावन्नित्यबहुवचनान्तत्वं नाम बहुवचनमात्रप्रकृतित्वम् । मात्रशब्देन द्विवचनैकवचनयोर्व्यवच्छेदः । दारशब्दो नित्यबहुवचनान्त इति व्यवहारः । तत्रान्तशब्दः परसमीपवर्तिनि लाक्षणिकः । नित्यं सर्वदा ( सकलप्रयोगे ) स्वप्रकृतिकं बहुवचनमन्तः परसमीपवर्ती यस्य स नित्यबहुवचनान्तः । परसमीपवर्तित्वं च परत्र श्रूयमाणत्वं लोपप्रतियोगित्वं वा । तथा च बहुवचनमात्रप्रकृतित्वं नाम बहुवचननिष्ठविधेयतानिरूपितोद्देश्यत्वे सति द्विवचनैकवचननिष्ठविधेयतानिरूपितोद्देश्यत्वानाश्रयत्वम् । अयं सुन्दरदार इत्यत्र सुन्दर जस् दार जस् इत्यलौकिकविग्रहे बहुव्रीहिविधानात् दारशब्दस्य बहुवचनमात्रप्रकृतित्वमस्त्येवेति नाव्याप्तिः ।

'न च प्रत्युच्चारणं शब्दानां भेद' इति मते रामा इत्यत्र रामशब्देऽपि बहुवचनमात्रप्रकृतितयातिव्याप्तिरिति वाच्यम्, बहुवचनप्रकृतित्वे सति अन्यवचनप्रकृतिवृत्त्यानुपूर्वीरहितत्वं नित्यबहुवचनान्तत्वमिति विवक्षितत्वात् ।

न चैवमपि दारयतेर्भावघञन्तदारणार्थकदारशब्दस्यैकवचनप्रकृतितया तद्वृत्त्यानुपूर्व्या दारत्वरूपायाः स्त्रीबोधकदारशब्दे सत्त्वेनाव्याप्तिस्तदवस्थेति वाच्यम्, बहुवचनविशिष्टत्वं नित्यबहुवचनान्तत्वमिति परिष्कारेणादोषात् । वैशिष्ट्यञ्च स्वप्रकृतित्वस्वविशिष्टवृत्त्यानुपूर्व्यभाववत्त्वोभयसम्बन्धेन । सम्बन्धघटकस्ववैशिष्ट्यञ्च स्वासजातीयवचनप्रकृतित्वस्वप्रकृतिबोध्यार्थपरत्वोभयसम्बन्धेन । रामस्य दारा इत्यादिबहुवचनं परिगृह्य तत्प्रकृतिभूतदारशब्दे लक्षणसमन्वयः कार्यः । तथा हि दारा इति असरूपबहुवचनस्य स्वप्रकृतित्वरूपः प्रथमसम्बन्धो दारशब्दे वर्तते, तथा स्वासजा-

वीयवचनप्रकृतित्वादिसम्बन्धद्वयेन तद्विशिष्टो न स्त्रीवाची दारशब्दो न वा दारणार्थवाची। आद्ये प्रथमसम्बन्धविरहात् द्वितीये स्वप्रकृतिबोध्यार्थपरत्वरूपद्वितीयसम्बन्धविरहात्। एवञ्च स्वविशिष्टस्याप्रसिद्धौ तद्वृत्त्यानुपूर्व्या अप्यप्रसिद्धत्वात् अप्रसिद्धप्रतियोगिकाभावस्य च शाब्दिकैः स्वीकारेण तादृशानुपूर्व्यभाववत्त्वरूपद्वितीयसम्बन्धोप्यस्तीति तादृशबहुवचनविशिष्टत्वरूपं नित्यबहुवचनान्तलक्षण समन्वेति। एवं लाजादिशब्देष्वपि लक्षणसमन्वय ऊहनीयः। एतच्च लक्षणमलक्ष्येषु घटादिशब्देषु नास्तीति नातिव्याप्तिरपि।

अत्र लक्षणे स्वप्रकृतित्वरूपप्रथमसम्बन्धनिवेशो विफल इति न मन्तव्यम्। यतः तत्सम्बन्धानुपादाने बहुवचनविशिष्टवृत्त्यानुपूर्व्यभाववत्त्वं नित्यबहुवचनान्तत्वमितिनिरुक्तिपर्यवसाने मैथिली दारा इत्यत्राव्याप्तिर्न्न परिहृता स्यात्। तथा हि कुठारेण वृक्षस्य दाराः (दारणानि) इति बहुवचनमादाय स्वविशिष्टो वृक्षस्य दारः (दारणम्) इति वाक्यघटको दारशब्दः तत्र स्वासजातीयप्रथमैकवचनप्रकृतित्वरूपप्रथमसम्बन्धस्य स्वप्रकृतिबोध्यदारणार्थपरत्वरूपद्वितीयसम्बन्धस्य च सत्त्वात् तद्वृत्त्यानुपूर्वीमत्त्वसद्भावेन तदभाववत्त्वरूपस्य नित्यबहुवचनान्तलक्षणस्य तत्रागमनात्। तत्संबन्धोपादाने तु वृक्षस्य दारा इति बहुवचनमादाय लक्षणासमन्वयेऽपि रामस्य दारा इति बहुवचनं परिगृह्य लक्षणसमन्वयान्नाव्याप्तिः।

नैयायिकैरप्रसिद्धप्रतियोगिकाभावानभ्युपगमेनोक्तलक्षणस्य क्वापि समन्वयाभावेनासंभवदोषपातात् तन्मतानुसारेण स्वविशिष्टवृत्त्यानुपूर्व्यभाववत्त्वरूपद्वितीयसम्बन्धमनुक्त्वा तत्स्थाने स्वाभाववत्त्वरूपः सम्बन्धो वाच्यः। अभावीयप्रतियोगितावच्छेदकसम्बन्धस्तु स्वविशिष्टवृत्त्यानुपूर्वीमत्त्वं वक्तव्यः। अत्र सम्बन्धद्वयं प्रागुक्तमेव। स्वासजातीत्यत्र साजात्यं च स्ववृत्तिबहुवचनत्वद्विवचनत्वैकवचनत्वान्यतमत्त्वमिति दिक्।

एवमुक्तसम्बन्धद्वयेन द्विवचनविशिष्टत्वं नित्यद्विवचनान्तत्वम्। एकवचनविशिष्टत्वं नित्यैकवचनान्तत्वम्। वचनविशिष्टत्वं च नियतवचनत्वं नित्यबहुवचनादित्रितयसाधारणं बोध्यम्। इममर्थमभिप्रेत्यैव एकशब्दः संख्यायां नित्यैकवचनान्तः उभशब्दो नित्यं द्विवचनान्त इत्यादिः शाब्दिकानां व्यवहारः ॥७०॥

### विंशत्यादिशब्दविचारः

## विंशत्याद्याः परार्धान्तास्त्रिविधा अर्थभेदतः ॥७१॥

ये विंशतित्वादिसंख्यायुक्तसंख्येयवाचकाः ।
नित्यैकवचनान्तास्ते भवन्तीति विनिर्णयः ॥७२॥

विंशत्याद्याः परार्धान्ता ये संख्यावाचकाः शब्दाः ते अर्थत्रैविध्यात् त्रिविधाः अर्थत्रिवयशक्ता इति यावत् । तथा हि (१) विंशतित्वादिसंख्याविशिष्टसंख्येये, (२) विंशतित्वादिसंख्यामात्रे, (३) विंशतित्वादिसंख्याविशिष्टसंख्येयसमूहे च शक्ताः ।

तत्र ये विंशतित्वादिविशिष्टसंख्येयपरास्ते नित्यैकवचनान्ताः । उदाहरणम्—विंशतिर्घटाः, विंशतिं घटानानय, विंशत्या घटैर्जलमानीतम्, शताय ब्राह्मणेभ्यो गावो दत्ताः ।

एवञ्च विंशतिद्वयतात्पर्येण विंशती घटा इत्यादयो नैव प्रयोगाः, नापि बहुविंशतितात्पर्येण विंशतयो घटा इत्यादयः । तथा सति नित्यैकवचनान्तत्वभङ्गापत्तेः । तदाह-'नित्यैकवचनान्तास्ते भवन्तीति विनिर्णय' इति ते संख्यावच्छिन्नसंख्येयपरा विंशत्यादयो नित्यैकवचनान्ता भवन्तीति विदुषां निर्णय इत्यर्थः । तथा चामरसिंहः—

"विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः" । अस्यार्थः ये विंशत्याद्याः संख्येयसंख्ययोः अर्थात् विंशतित्वादिसंख्याविशिष्टसंख्येये प्रयुज्यन्ते ते सर्वे सदा एकत्वे एकत्वशक्ता एव, नित्यैकवचनान्ता इति यावत् । द्वे शते त्रीणि शतानीत्यादयः प्रयोगास्तु संख्येयसमुदायार्थपराणां न तु संख्येयमात्रपराणामिति वक्ष्यते ॥७१-७२॥

ते च संख्येयवस्तूनां विशेषणपराः परम् ।
न चैषामेकशेषो वा द्वन्द्वो वानभिधानतः ॥७३॥

अपरश्चायं विशेषः । ये विंशतित्वाद्यवच्छिन्नसंख्येयपरास्ते संख्येयवस्तूनां घटादीनां विशेषणसमर्पका एव भवन्ति न विशेष्यसमर्पकाः । घटानां विंशतिः, गवां शतमित्येवं विशेष्यसमर्पकत्वेन प्रयोगास्तु संख्यामात्रपराणां संख्येयसमूहार्थपराणां चेत्यग्रे स्पष्टीभविष्यति ।

अत्रान्यमपि विशेषमाह—'न चैषामेकशेषो'इति । एषां विंशतित्वाद्यवच्छिन्नबोधकविंशत्यादिशब्दानामेकशेषो न भवति, नापि द्वन्द्वसमासः । कुतः ? अनभिधानात् । विंशती घटा इत्यादिवच्चत्वारिंशद्घटादेरप्रतीतेः नित्यैकवचनान्तत्वानुपपत्तेश्च । विंशत्यादिशोऽधिकसंख्यकसंख्येयार्थविवक्षायान्तु घटानां विंशती विंशतयो चेत्येवमेव प्रयोक्तव्यं भवति । एवम् विंशतिश्चैकविंशतिश्च विंशत्येकविंशती इत्यादेरपि नास्ति बोधकता ।

यथा एकादिदशान्तानामेकशेषद्वन्द्वावनभिधानान्न भवतस्तथा संख्येयपराणां विंशत्यादीनामपि तौ न भवतः।

यद्यपि शब्देन्दुशेखरकृता नागेशभट्टेन एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वानभिधानान्न स्त इत्येवोक्तं तथापि संख्येयमात्रवाचिनामुपलक्षणं तत् ॥७३॥

द्वितीयभेदास्ते संख्यामात्रं प्रत्याययन्ति ये।
इमे तु सर्ववचनाः एकशेषप्रवर्तनात् ॥७४॥

ये च द्वितीयप्रभेदा विंशत्यादयो विंशतित्वादिसंख्यामात्रपराः तेष्वेकशेषप्रवृत्त्या द्विवचनबहुवचने अपि भवत.। तथा ह्येकं चेद्विंशतित्वं विवक्षितं तदैकवचनं, घटानां विंशतिः संख्या। यदि च विंशतित्वद्वय विवक्षितं तदा द्विवचनं, घटानां विंशती संख्ये। यदि च बहु विंशतित्वं विवक्षितं स्यात्तदा बहुवचनं, घटानां विंशतयः संख्या इति।

संख्यामात्रपरविंशत्यादेः प्रयोगान्तरं यथा विंशतिसंख्याका घटा इत्यादि। यद्यपि एकसंख्याको घटः, द्विसंख्याकौ घटौ इत्यादयोऽपि प्रयोगा जायन्ते, तथापि एकादिदशान्तानां न संख्यामात्रशक्तत्वम्। किन्तूक्तप्रयोगे लक्षणया धर्ममात्रपरत्वम्। तेषां संख्यामात्रशक्तत्वे मानाभावात्। विंशत्यादीना संख्यामात्रशक्तत्वे तु कोषरूपानुशासनं प्रमाणम्। तथाचामरः

"विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः।
संख्यायां द्विबहुत्वेस्तस्तेषु चानवतेः स्त्रियः" ॥

अत्र संख्याया द्विबहुत्वे स्त इत्यस्य संख्यामात्रबोधकत्वे द्वित्वबहुत्वे अपीत्यर्थः। अत्र वाक्ये सदेत्यस्यासम्बन्धात्। संख्यामात्रार्थकत्वे तन्नैकत्वबोधकत्वस्य स्वत एव सद्भावात् एकत्वे इति विशिष्य नोक्तम्। एकशेषेण विंशतित्वद्वयादिबोधकत्वे द्विवचनबहुवचने अपि। संख्याविशिष्टसंख्येयत्वबोधकत्वे सदेत्यस्योपादानेन एकशेषाभावस्य सूचनात्। संख्यामात्रपरत्वेऽप्येकशेषाभावो मा ज्ञायीत्याशयः ॥७४॥

तृतीयभेदाः संख्येयसमूहप्रतिपादकाः।
एभिर्योगे च, षष्ठ्येव परिच्छेद्यार्थवाचकात् ॥७५॥

तथात्वे चैकशेषेण समुदायादिशब्दवत् ।
इमेऽपि सर्ववचनाः प्रयुज्यन्ते यदृच्छया ।
विशेष्यबोधका एव संख्येयार्थस्य ते ध्रुवम् ॥७६॥

एतावता विंशत्यादेरर्थद्वयं सप्रपञ्चमुक्तम् । अतः परं तृतीयोऽर्थो निरूप्यते योऽर्थोऽमरसिंहेन नोक्तः ।

विंशत्यादयो विंशतित्वादिविशिष्टसंख्येयाख्यसमूहवाचका अपि । एतद्योगे च समूहसंघादियोगवत् परिच्छेद्यबोधकात् षष्ठ्येव भवति । यथा घटानां विंशतिरानीता, गवां शतं दत्तम् , अत्र भीष्मशतं दग्धं दुर्योधनशतं तथा इति ।

न चात्र विंशत्यादयो विंशतित्वाद्यवच्छिन्नवाचका एव, न तु तत्समूहबोधका इति वाच्यम् , समूहत्वेनाबोधकविंशत्यादियोगे षष्ठ्या अप्रवृत्तेः । एतद्योगे च समूहादियोगवत् षष्ठ्या एव प्रयोग इति वैषम्यात् । किञ्च तेषां सदैकत्वे इत्यभिधानात् कोटयो महाहत्यानाम् , रथानामयुतैः षड्भिरिति बहुवचनानुपपत्तिः ।

नापि संख्यामात्रबोधकाः, आनीतेत्यादिसमानाधिकरणविशेषणानुपपत्तेः । तस्मात् संख्यावच्छिन्नबोधकेभ्यः संख्यामात्रबोधकेभ्यश्च विलक्षणा एवैते संख्येयसमूहबोधकाः । अत एवैषामेकशेषेण समूहसंघवृन्दादीनामिव सकलवचनान्तता, न तु संख्यावच्छिन्नबोधकविंशत्यादिवन्नित्यैकवचनान्तता ।

अथ यदि विंशत्यादयः संख्येयसमूहवाचका अपि तदा अमरसिंहेन कुतो नोक्ता इति चेत्–समूहवाचिनां समूहादिशब्दवद्वचनव्यवस्थया सकलवचनान्तत्वस्य स्वत एव लभ्यत्वात् । तथापि विंशत्यादीनां संख्येयसमूहार्थता कुतो नोक्ता इति चेत् ? उच्यते–संख्यावच्छिन्नसंख्येये वर्तमाना विंशत्याद्याः सदैकत्वे वर्तन्त इत्यर्थबोधनद्वारा तेभ्य एकवचनमेव न द्विवचनबहुवचने भवत इत्यर्थस्य पर्यवमानेन वचनव्यवस्थाया एव उद्देश्यत्वात् संख्येयसमूहबोधकविंशत्यादेस्तु समूहवृन्दादिवद्व्यवस्थासत्त्वेन तत्र वचनव्यवस्थाया अनावश्यकत्वात् ।

यत्तु विंशत्यादयो न संख्येयसमूहे शक्ताः अत एवामरसिंहेन नोक्ताः । समूहत्वेन बोधस्य आनुभविकत्वे स बोधो लक्षणयोपपद्यते इत्याशयेन न तदुक्तिरिति—तन्न । तथा सति संख्यामात्रे शक्तिरस्तु, संख्येयस्य लक्षणयैव निर्वाह इति श्लोकस्य संख्येयेऽपि शक्तिर्नोच्येत । तस्मात्समारायोऽमरसिंहस्य ।

तर्हि विंशत्याद्यानां समूहवाचकत्वं कथमवधार्यते ? विंशतिर्घटाः, घटानां विंशतिरित्यादिद्विविधप्रयोगदर्शनात् शक्तिद्वयमवधार्यते इति तु न वक्तव्यम्, उभयत्रापि संख्येयानामेव प्रतीत्या विंशत्यादीनां परिच्छेद्यान् प्रति विशेषणत्वेन विशेष्यत्वेन वा बोधकत्वोपगमेनैव तदुभयप्रयोगोपपत्तेः। तत्रायं विशेषः। परिच्छेद्येषु विशेषणता अभेदसम्बन्धेन विशेष्यता तु संख्येयनिष्ठभेदसम्बन्धावच्छिन्नविशेषणतानिरूपितेति। तत्र च विशेषणतासमर्पकत्वे नित्यैकवचनान्तता विशेष्यतासमर्पकत्वे तु द्विवचनबहुवचनान्ततापीति व्यवस्था। विंशतिर्घटा इत्यतो विंशतित्ववदभिन्ना घटा इति बोधः। घटाना विंशतिरित्यतश्च घटगतविंशतित्ववन्त इति तस्मादुक्तप्रयोगद्वैविध्यात् शक्तिद्वयमवधार्यत इति न साम्प्रतमिति चेत्—

अत्रोच्यते महामहोपाध्यायमैथिलपरमेश्वरकृतप्रयोगदर्पणे "विंशत्यादौ त्विष्ट एवैकशेषः। स च संख्यावच्छिन्नसमुदायपराणां, ब्राह्मणानां विंशती इत्यादौ द्वित्वसंख्यावच्छिन्नौ द्वौ समुदायावित्यर्थप्रतीतेः, विंशती घटा इत्यादौ चत्वारिंशतोप्रतीतेश्चेति भाष्यादय" इत्युक्तम्। अनेन विंशत्यादीनां विंशतित्वाद्यवच्छिन्नशक्तत्वम् विंशतित्वाद्यवच्छिन्नसमुदायशक्तत्वं चेति स्पष्टमेव लभ्यते।

अपि च पङ्क्तिविंशतित्रिंशदितिसूत्रे "एवन्तर्हि परिमाणिनि विंशत्यादयो भविष्यन्ती"ति भाष्यव्याख्यायां कैयटः "परिमाणी च द्विविधः द्रव्यसंघातो भिन्नानि वा द्रव्याणि। तत्र संघातस्यैकत्वाद्विंशतिरित्येकवचनं सिद्ध्यति। द्रव्याणान्तु परिमाणित्वे विंशतिगवम् विंशतिपूलीति समानाधिकरणसमाससिद्धिरिति भाव" इति।

*अस्य कैयटग्रन्थस्यायमर्थः*। *विंशत्यादयः परिमाणिबोधकाः*। *परिमाणी च द्विविधः* द्रव्यसंघातः अर्थात् विंशतित्वादिविशिष्टव्यक्तीनां संघातः समूहो, भिन्नानि वा द्रव्याणि अर्थात् विंशतित्वादिविशिष्टा व्यक्तयः। तत्र संघातस्यैकत्वात्तद्गतमेकत्वं यदि विवक्ष्यते तदा विंशतिरित्येकवचनं सिद्ध्यति। यदा पुनः समूहद्वयविवक्षा तदा द्विवचनम्, यदा च संघातगतबहुत्वविवक्षा तदा बहुवचनमपि। एकवचनं सिध्यतीत्यस्य एकवचनमपि *सिद्ध्यतीत्यर्थपरत्वात्*। *द्रव्याणान्तु परिमाणित्वे विंशत्यादेः विंशतित्वादिपरिमाण*-विशिष्टव्यक्तिवाचित्वे विंशतिगवं विंशतिपूलीति समानाधिकरणसमासः सिद्ध्यति। यद्यत्र विंशतिपदार्थो विंशतित्वव्यक्त्यारब्धसंघातः स्यात्तदा गोपूलादिभिः सामानाधिकरण्याभावा "तद्धितार्थोत्तरपदसमाहारे" इत्यनेन शास्त्रेण समानाधिकरणेन सह विधीयमानः समासो न स्यात्। तस्मात्तत्र विंशतिपदार्थः परिमाणिव्यक्तयः स्वीक्रियते इति। एतेन भाष्यव्याख्यानपरकैयटग्रन्थेन विंशत्यादेः विंशतित्वाद्यवच्छिन्नवाचित्वं तत्समूहवाचित्वं च लभ्यते। एवं तावत् विंशत्यादौ शक्तिद्वयं निरूपितम्।

तत्र संख्यावच्छिन्नपरा विंशत्यादयो नित्यैकवचनान्ताः। तत्प्रयोगा विंशतिर्घटाः सन्ति, विंशतिं घटान् आनय, विंशत्या रूप्यकैः क्रीतमित्यादयः। एवं त्रिंशद् घटाः, त्रिंशतं घटान्, त्रिंशता रूप्यकैः क्रीतमित्यादयः। विंशतित्ववदभिन्ना घटा इत्यादिस्तदर्थः।

संख्यामात्रपरास्तु सकलवचनान्ताः। यथा घटानां विंशतिः संख्या, एकं घटवृत्तिविंशतित्वं संख्येति तदर्थः। घटानां विंशती संख्ये, बहुघटवृत्तिविंशतित्वद्वयं संख्येत्यर्थः। इह विद्यालये छात्राणां विंशतयः संख्या, बहुच्छात्रगतबहुविंशतित्वानि संख्या इत्यर्थः। संख्यापरविंशत्यादियोगे संख्येयवाचकपदादिपदं बहुवचनान्तमेव भवति, स्वोत्तरवर्तिविभक्त्या प्रकृत्यर्थे संख्याया विवक्षितत्वात् तस्य च बहुत्वात्।

विंशतित्वादिसंख्यावच्छिन्नसंख्येयसमूहबोधका अपि विंशत्यादयः समूहादिशब्दवत्सकलवचनान्ताः, यथा घटानां विंशतिरानीता, बहुघटगतविंशतित्ववदारब्ध एकः समूह आनीत इत्यर्थः। एवं घटानां विंशती आनीते इत्यस्य घटगतविंशतित्वद्वयवदारब्धौ द्वौ समुदायावित्यर्थः। एवमेव 'इहच्छात्राणां विंशतयः पठन्ति' इत्यस्य बहुच्छात्रगतबहुविंशतित्ववदारब्धा बहवः समूहाः पठन्तीत्यर्थः।

यद्यपि समूहो नारभ्यते, अपि तु समूहत्वम्, तथापि समूहत्वगतारम्भकर्मत्वस्य-समूहे समारोपात्तथा बोधः।

इदमत्र बोध्यम् विंशत्यादिप्रकृतिकविभक्तिवाच्यसंख्यायाः प्रकृत्यर्थसंख्यायामेवान्वयो व्युत्पत्तिसिद्धः व्युत्पत्तिवैचित्र्यात्। तथा चोक्तं व्युत्पत्तिवादे गदाधरेण "विरुद्धसंख्यावच्छिन्नवाचकशतादिपदोत्तरविभक्त्युपस्थाप्या संख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेती"ति।

नागेशस्तु पङ्क्तिविंशतीतिसूत्रभाष्यस्य प्रदीपोद्योते आह 'अत्र वदन्ति विंशतिशब्दद्व्यादिशब्दयोः को विशेषः समुदितद्रव्यसमवायित्वस्योभयत्रापि तुल्यत्वात्। द्व्येकयोरित्यादौ तेषामपि संख्यामात्रवचनताया दृष्टत्वाच्च।

तस्मादयमत्र भाष्यार्थः विंशत्यादयो द्व्यादयश्च धर्मशक्ता एव। धर्मधर्मिणोरभेदाच्च व्यक्तौ कार्याणि। तयोश्च भेदाभेदौ। विंशत्यादयः कदा चिद् भेदेन संख्यां वदन्ति गवां विंशतिरिति, कदा चिदभेदेन विंशतिर्गाव इति। यदाप्यभेदेन तदापि धर्मगतसंख्यावैशिष्ट्येनैव ततो द्रव्यप्रतीतिः शब्दशक्तिस्वभावात्। यथा गावो धनमित्यादौ प्रीतिहेतुत्वगुणगतसंख्यावैशिष्ट्येन द्रव्यप्रतीतिर्धनशब्दात्। इयांस्तु विशेषः तत्र कदाचित्स्वगतसंख्यावैशिष्ट्येनापि प्रतीतिः। अन्यगतधर्मवैशिष्ट्यमन्यस्य कथमिति चेत्—आरोपेणेति गृहाण। द्व्यादयस्तु स्ववाच्यसंख्याविशिष्टद्रव्याभेदेन तद्गतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति शब्दशक्तिस्वभावादिति न कदाचिदपि तत्रैक-

वचनम् नापि विंशत्यादिभ्यो बहुवचनम्। विंशतिप्रचये तु बहुवचनमिष्टमेव। द्वयेकयोरित्यादौ तु विंशतिवदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिरिति द्विवचनम्। एवं प्रवीतिरीदृशवृत्तिविषयैवेति नातिप्रसङ्गः। न ब्राह्मणं हन्यादित्यादौ जातावेकवचनमित्यस्याप्ययमेवार्थः। जातिगतसंख्यारोपाद्द्रव्यस्यैव प्रतीतिरिति। तद्गतसंख्यारोपश्च विनिगमनाविरहात्सकलव्यक्तिष्विति सकलव्यक्तिप्रतीतिः। जातिप्राधान्यविवक्षेत्यस्याप्ययमेवार्थः तद्ध्वनयन् वक्ष्यति अथ वाऽव्यतिरेकादि"ति।

इदमत्र बोध्यम् अयं नागेशसिद्धान्तो "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोरि"ति नामलिङ्गानुशासनप्रतिकूलः, व्युत्पत्तिवादग्रन्थविरुद्धः, प्रोक्तकैयटग्रन्थविरुद्धश्च। सर्वत्रारोपरूपभ्रमात्मकबोधस्वीकारोऽनुचितश्च। तदपेक्षयोक्तरीत्या शक्तित्रयाभ्युपगमो न्याय्य इति।

अथ यदुक्तं "संख्यावच्छिन्नपराणां न द्वन्द्व इति" तत्रायमनुयोगः। कथं तर्हि एकश्च दश च एकादश, द्वौ च दश च द्वादशेत्यादयो द्वन्द्वाः? न च नैते द्वन्द्वसमासाः, अपि तु एकाधिका दशेत्यादिविग्रहकतत्पुरुषाः। शाकपार्थिवादित्वादधिकस्य लोप इति वाच्यम्, ऐच्छिकशाकपार्थिवादित्वकल्पने मानाभावात्। एकादशेत्यादिप्रामाणिकप्रयोगास्तु न मानं, तेषां द्वन्द्वसमासत्वेनाप्युपपत्तेः, एकादशेत्यादिव आधिक्यस्य पदार्थतावच्छेदकरूपेणानुभवाभावाच्च। किञ्च तद्रीत्या नवदशभिरित्यापत्तिः। सिद्धान्तकौमुद्यादौ एकादशादीनामेकश्च दश चेत्यादि विग्रहोक्त्या तद्विरोधश्चेति चेत्, अत्राहुः जगद्गुरुगुरुवरशिवकुमारशास्त्रिचरणाः, द्वन्द्वानभिधानवादिनामिदं तात्पर्यम् यत् संख्यावच्छिन्नशक्तानां नानासंख्याप्रकारकबोधपरो द्वन्द्वो न भवत्यनभिधानात्। एकादशद्वादशादिशब्दास्त्वेकादशत्वद्वादशत्वरूपैकसंख्याप्रकारकबोधं जनयन्ति, न त्वेकत्वदशत्वाद्यनेकसंख्याप्रकारकम्। तेन द्वन्द्वो भवत्येव। नवदशत्वादिकं न काचित्संख्येति नवदशादिशब्दात् नवत्वदशत्वादिनानारूपेणैव बोधसंभव इति तादृशो द्वन्द्वो नेति। न चैवमपि "ननाद ढक्कां नवपञ्चवारमि"ति कथं प्रयोग इति वाच्यम्? तत्र हि नव च पञ्च च वाराण्यावृत्तयो यत्रेति विग्रहे त्रिपदबहुव्रीहिर्न तु द्वन्द्व इति।

संख्यावाचकेषु एकादिचतुरन्तास्त्रिलिङ्गाः। तत्रैकशब्दो नित्यमेकवचनान्तः। द्विशब्दो नित्यद्विवचनान्तश्चतुःशब्दो नित्यबहुवचनान्तः। एवं पञ्चाद्यष्टादशान्ता नित्यबहुवचनान्ताः। तेऽमी त्रिलिङ्गा अपि लिङ्गप्रयुक्तरूपभेदं न लभन्ते, अपि तु त्रिष्वपि लिङ्गेषु सरूपा एव। तथाचोक्तं 'युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपा' इति। पञ्चन् इत्यादयः "ष्णान्ता षडि"तिसूत्रेण षट्संज्ञकाः। एकाद्यष्टादशान्ताः संख्याविशिष्टसंख्येये शक्ताः। एकोनविंशत्याद्याः नवनवत्यन्ताः स्त्रीलिङ्गाः। ते च संख्यावच्छिन्नपरा एकवच-

न्यान्वा एव। संख्यामात्रपराः संख्येयसंघातपराश्चानियतवचनाः। शतादिपरार्धान्तेषु केवलं कोटिशब्दः स्त्रीलिङ्गः। अन्ये प्रायेण नपुंसकलिङ्गाः। शतादयोऽपि समूहपराः संख्यामात्रबोधकाश्चानियतवचनाः। संख्येयमात्रबोधकास्तु नित्यैकवचना इति बोध्यम्।

संख्यावाचकविषये विदुषां मतसंग्रहः

(१) एकादिपरार्धान्ताः संख्यावच्छिन्नवाचका इति गदाधरस्य मतम्।

(२) ते सर्वे संख्यामात्रवाचका इति नागेशस्य।

(३) एकादयोऽष्टादशान्ताः संख्यावच्छिन्नवाचकाः। एकोनविंशत्यादयस्तु संख्यावाचकाः संख्यावच्छिन्नवाचकाश्च इत्यमरसिंहस्वरसः।

(४) एकाद्यष्टादशान्ताः संख्यावच्छिन्नवाचकाः। एकोनविंशत्यादयस्तु संख्यावच्छिन्नवाचकाः संख्यावच्छिन्नसंघातवाचकाश्चेति भट्टादीनां कैयटस्य च मतम्।

(५) अस्माभिस्तु सर्वेषां मतानि विभाव्य एकाद्यष्टादशान्तानां संख्यावच्छिन्ने विंशत्यादीनान्तु संख्यायां संख्यावच्छिन्ने संख्यावच्छिन्नसमुदाये च शक्तिरुक्ता। एषां मतभेदेन शाब्दबोधे भेदेऽपि प्रयोगेषु न कश्चिद् भेदः।

यत्तु व्युत्पत्तिवादे "शतादिपदोत्तरविभक्त्यर्थसंख्या प्रकृत्यर्थतावच्छेदकसंख्यायामेवान्वेति, यथा शतमेकं, द्वे शते, त्रीणि शतानीत्युक्त्वं तत्र शतादिपदं विंशत्यादेरुपलक्षणम्। अपि च शतमेकमित्यादिवाक्यस्य घटानामित्यादिः न तु घटा इति शेषः द्वे शते घटा इत्यादिवाक्यस्य प्रामाण्याङ्गीकारे 'विंशत्याद्याः सदैकत्वे' इत्यनुशासनविरोधान् तथा प्रयोगाणां क्वचिदप्यदर्शनाच्च। तस्मात् परिमाणिन्यभेदेन विशेषणपराणां विंशत्यादीनामेकवचनान्तत्वे एव साधुत्वमेष्टव्यम्। मतान्तरे तु द्वे शते इत्यादौ शतादयः शतादिसमूहबोधकाः द्वौ शतसमूहौ इत्यर्थप्रतीतेः, तदा तु घटादिसंख्येयबोधकादुचितैव षष्ठीति प्रयोगे भेदाभाव इत्यलमतिविस्तरेण ॥७५–७६॥

क्वचिदादरे बहुवचनम्

आदरे क्वचिदेकस्मिन् द्वयोरपि च कुत्र चित्।
बहूनां वचनं काव्ये नाटकेऽपि च दृश्यते ॥७७॥
संज्ञाभिन्नादतः शब्दान्मिश्रादेः परवर्तिनि।
तस्मिन् साधुत्वमेष्टव्यं यथा दारादितः परे ॥७८॥

क्वचिदादरबोधकं बहुवचनमेकद्वित्वेऽपि प्रयुज्यते कविभिः। यथा एकस्मिन् आर्य-

मिश्रान् विज्ञापयामि। तत्रभवन्तः प्रमाणम्। द्वयोः आचार्याभिनवगुप्तपादा आहुः। गुरुचरणा आहुः। क्वचित्क्वचिदेतादृशप्रयोगदर्शनादद्यत्वे देवदत्तमहोदयाः, भवदत्त-महाशयाः, महामहोपाध्याया इत्येवं भूयांसि एकस्मिन् बहुवचनानि प्रयुञ्जते मन्यन्ते चैकवचनप्रयोगे तदनादरमिव। तदेवं बहुवचनानां साधुत्वे महाकविसंप्रदाय एव शरणम्। परन्तु कवयोऽपि संज्ञाशब्दाद्बहुवचनं क्वचिदपि न प्रयुक्तवन्तः। अतोऽद्यत्वे संज्ञाशब्देऽपि बहुवचनं साधु मन्यमाना उपेक्ष्याः। व्याकरणविरोधस्तु दारशब्दादिपूक्त-रीत्या कथंचिदत्रापि परिहर्तुं शक्यत एव। परन्तु रामायणपुराणेतिहासादिष्वेवं प्रयोगा नैव दृश्यन्ते। तस्मादियं सृष्टिर्नूतना प्रतिभातीत्यलम्।

वयं ब्रूम इत्यादेरुपपत्ति

वयं ब्रूमः इत्यादि बहुवचनं साधु, "अस्मदो द्वयोश्चे"ति शास्त्रात्। न च सविशेष-णानां प्रतिषेधात्

"केचिद्वदन्त्यमृतमस्ति पुरे सुराणां
केचिद्वदन्ति वनिताधरपल्लवेषु।
ब्रूमो वयं सकलशास्त्रविचारदक्षा
जम्बीरनीरपरिपूरितमत्स्यखण्डे॥"

इत्यत्र कथमेकस्मिन् बहुवचनमिति वाच्यम्, कौमुद्या "सविशेषणानां प्रतिषेध" इति वार्तिकव्याख्याया शेखरकृता दत्तोत्तरत्वात्। तत्र हि इदं मुख्यार्थे बहुवचननिषे-धाय। यदा त्वस्मच्छब्दस्य स्वघटिते उद्भूतावयवभेदे समुदाये लक्षणा तदा बहुवचनं भवत्येव। तेन 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नता.' इत्यादि सिद्धमित्युक्तम्। शब्दकौस्तुभे तु "सविशेषणानां प्रतिषेध" इति वार्तिके विशेषण-पदेनोद्देश्यसमर्पका एव गृह्यन्ते। तेन 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभि-मानोन्नता' इत्यादौ न प्रतिषेध इत्युक्तम्। परन्त्वेवंरीत्या "ब्रूमो वयं सकलशास्त्रविचार-दक्षा" इत्यत्र बहुवचनं नोपपद्यते ॥ ७७–७८ ॥

अनुपङ्गे लिङ्गवचनविचार

पूर्ववाक्यादुत्तरत्र पूर्वस्मिन्नुत्तरात्तथा।
शब्दोऽनुपज्यते लिङ्गसंख्याविपरिणामतः ॥७९॥

आकाङ्क्षितपदस्य पूर्ववाक्यादुत्तरवाक्येऽनुपङ्गो भवति। क्वचिच्च परवाक्यात्पूर्ववाक्ये। स च यथासंभवं स्वरूपेण, लिङ्गविपरिणामेन, वचनविपरिणामेन, उभयविपरिणामेन वेत्यष्टधा।

(१) तत्र स्वरूपतः पूर्ववाक्यादुत्तरवाक्येऽनुपङ्गो यथा—

"उपकर्त्रारिणा सन्धिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः" ॥
चैत्राय लेखनी दत्ता, मैत्राय पुस्तकी।

अत्र प्रथमोदाहरणे सन्धिरिति पूर्ववाक्यगतं स्वरूपेणैव "न मित्रेणे"त्युत्तरवाक्येऽनुपज्यते। द्वितीयेऽपि दत्तेतिपदं तथाभूतमेव मैत्राय पुस्तकीत्युत्तरवाक्ये सम्बध्यते। अन्यथा वाक्यमपूर्णं स्यात्।

(२) स्वरूपेणोत्तरवाक्यात्पूर्ववाक्येऽनुपङ्गो यथा—

"निरुद्ध्यमाना यदुभिः कथंचिन्मुहुर्यदुचिक्षिपुरग्रपादान्।
ध्रुवं गुरून् मार्गरुधः करीन्द्रानुल्लङ्घ्य गन्तुं तुरगास्तदोषुः" ॥
"स्वशक्त्युपचये केचित्परस्य व्यसनेऽपरे।
यानमाहुस्तदासीनं त्वामुत्थापयति द्वयम्" ॥

अत्र प्रथमपद्ये उत्तरवाक्यघटकस्य तुरगा इति पदस्य प्रथमवाक्येऽनुपङ्गः। द्वितीयपद्येऽपि स्वशक्त्युपचये केचिदित पूर्ववाक्ये 'परस्य व्यसनेऽपरे यानमाहुरि'त्युत्तरवाक्यात् 'यानमाहुरि'ति पदद्वयं स्वरूपेणैव सम्बध्यते।

(३) लिङ्गविपरिणामेन पूर्ववाक्यादुत्तरवाक्येऽनुपङ्गो यथा—

मया काशी विलोकिता, त्वया वृन्दावनम्।

अत्र विलोकितेति स्त्रीलिङ्गेन निर्दिष्टं पूर्ववाक्ये। तच्च नपुंसकलिङ्गेन विपरिणामात् विलोकितमित्याकारीकृतं सत् उत्तरवाक्ये सम्बध्यते। तेन त्वया वृन्दावनं विलोकितमिति वाक्यं संपद्यते।

(४) लिङ्गविपरिणामेन परवाक्यात् पूर्ववाक्येऽनुपङ्गो यथा—

मया काशी, त्वया तु वृन्दावनमवलोकितम्।

अत्र परवाक्यप्रविष्टस्यावलोकितमिति पदस्य स्त्रीलिङ्गेन विपरिणतस्य पूर्ववाक्येऽनुषङ्गः।

(५) वचनविपरिणामेन पूर्ववाक्यादुत्तरवाक्येऽनुषङ्गो यथा—

चैत्रो गृहे भुक्तवान्, मैत्रजैत्रौ बहिः।

अत्र प्रथमवाक्यस्थस्य भुक्तवानिति पदस्य द्विवचनविपरिणामेनोत्तरवाक्ये सम्बन्धस्तेन मैत्रजैत्रौ बहिर्भुक्तवन्ताविति वाक्यं सम्पद्यते।

(६) वचनविपरिणामेन परवाक्यात् पूर्ववाक्येऽनुषङ्गो यथा—

कस्मै चिदन्तेवासिने द्वे पुस्तके कस्मै चित्तु तन्मूल्यं प्रदत्तम्।

अत्रोत्तरवाक्यात् प्रदत्तमित्येकवचनान्तस्य द्विवचनान्ततया विपरिणमय्य प्रदत्ते इत्याकारं प्राप्तस्य पूर्ववाक्येऽनुषङ्गः। अत्र च पूर्ववाक्यादन्तेवासिने इति पदस्य यथावदुत्तरवाक्ये सम्बन्ध इत्यपि विशेष.।

(७) लिङ्गवचनोभयविपरिणामेन पूर्ववाक्यादुत्तरवाक्येऽनुषङ्गो यथा—

चैत्रमैत्रौ काशीं गतवन्तौ, तयोर्भार्यास्तु स्वस्वजनकगृहान्।

अत्र पूर्ववाक्यान्तर्गतस्य गतवन्ताविति पदस्य लिङ्गेन वचनेन च विपरिणामात् गतवत्य इत्येवाद्दशाकारूपं प्राप्तस्य परवाक्ये सम्बन्धः।

(८) लिङ्गवचनोभयविपरिणामेनोत्तरवाक्यात् पूर्ववाक्येऽनुषङ्गो यथा—

चैत्रमैत्रयोर्भार्याः स्वस्वजनकगृहान्, तौ तु तीर्थानि गतवन्तौ।

अत्रोत्तरवाक्यघटकं गतवन्ताचितिपदं लिङ्गेन वचनेन च विपरिणतं गतवत्य इत्याकारं सत् पूर्ववाक्ये सम्बध्यते इति दिक्॥ ७६॥

प्रकृतिविकृतिभावे वचनव्यवस्था

प्रकृतिर्विकृतिश्चैव यत्र कर्मद्वयं स्थितम्।
तत्रेच्छया लादयः स्युः क्वचिदेकत्र कर्मणि॥८०॥
एवं यत्रोभयं कर्तृ प्रकृतिर्विकृतिस्तथा।
तत्रापि क्वचिदेकस्मिन्नर्थे कर्तरि लादयः॥८१॥

अथेदं विचार्यते प्रकृतिविकृत्युभयकर्मकात् तादृशोभयकर्तृकाच धातोः किं प्रकृतिरूपे कर्मणि कर्तरि च लकाराः आहोस्वित् विकृतिरूपे ? तत्राद्यपक्षे काष्ठानि भस्म क्रियन्ते, काष्ठानि भस्म भवन्ति, काशाः कटः क्रियन्ते, काशाः कटो भवन्तीत्यादयः प्रयोगाः स्युः । अन्त्यपक्षे तु काष्ठानि भस्म क्रियते भवति वा । काशाः कटः क्रियते भवति वेत्यादयः । न च करोतेः काष्ठकाशादिकर्मकत्वमसंगतम् , तस्य यत्नार्थकत्वात् उत्पादनार्थकत्वाद्वा । अत एव काष्ठानि क्रियन्ते इत्यादयो न प्रयोगा इति वाच्यम् , यथा बलाहकाद्विद्योतते विद्युदित्यत्र निस्सरणाङ्गे विद्योतने द्युतिर्वर्तते बलाहकान्निःसृत्य विद्योतते इत्यर्थप्रत्ययात्, तथा करोतेरपि दाहाद्यङ्गे ( दाहादिपूर्वके ) उत्पादने वृत्त्या काष्ठादिकर्मकत्वसंभवात् । काष्ठानि भस्म करोतीत्यतः काष्ठानि दहन् भस्मोत्पादयतीत्यर्थः । दाहादेः स्वजन्यत्वसम्बन्धेनोत्पादनेऽन्वयात् यत्र काष्ठं दहति सुवर्णस्य च भस्म करोति तत्र काष्ठानि भस्म करोतीति न । तस्मात् काष्ठभस्मनोः प्रकृतिविकृतिभावविवक्षायामेव तथा प्रयोगः । एवं काशान् कटं करोतीत्यतः काशान् योजयन् कटमुत्पादयतीति बोधः । तथा च दाहादौ काष्ठादेः कर्मत्वमुत्पादने तु भस्मादेः ।

अत्र प्रकृतिविकृतिभावसम्बन्धे षष्ठीं विधाय काष्ठानां भस्म करोति, काशानां कटं करोतीत्यादयोऽपि प्रयोगा भवन्ति । प्रकृतिरूपे विकृतिरूपे वा कर्मादौ लादय इति सन्देहबीजन्तु आख्यातेनोभयोः कर्मणोः कर्त्रोर्वाऽभिधानेऽपि तयोर्विभिन्नसंख्यकत्वे उभयगतसंख्ययोर्बोधयितुमशक्यत्वादन्यतरगताया एव संख्याया बोधनीयत्वेन प्रकृतिगतसंख्याबोधकस्त्विङ् विधेय उत विकृतिसंख्याबोधक इत्यत्र विनिगमनाविरहः । न च 'काशी प्रयागो मथुरा च मया गंस्यन्ते' इत्यत्र यथा सकलकर्मगता संख्या तिङाभिधीयते तथा काष्ठानि भस्म क्रियन्ते इत्यत्रापि सकलकर्मगता संख्याभिधीयतामिति वाच्यम् एवं हि काष्ठं भस्म क्रियेते इति प्रयोगापत्तेः ।

अत्र वदन्ति प्रकृतिविकृत्युभयकर्मसत्त्वे "गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हि" इत्युक्तत्वात्, "भस्मीभवन्ति राजेन्द्र महापातककोटयः" इत्यादिप्रयोगदर्शनाच्च प्रकृतिसंख्याभिधायक एव तङ्प्रत्ययो भवतीति । तदसत् "पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः" इति महाभाष्यप्रयोगविरोधात् । अत्राख्यातस्य विकृतिभूतकुण्डलसंख्याबोधकत्वात् । 'गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हीति केनचिदुक्तस्य प्रामाणिकत्वाभावाच्च ।

## दर्पणकृन्मतखण्डनम्

यत्तु दर्पणकृता प्रकृत्युच्छेदसंभूतमिति भूषणस्थितकारिकाव्याख्यावसरे परे त्वि-

त्यादिनोक्तम् खदिराङ्गारसदृशे कुण्डले भवत इति भाष्यनिर्देशो नाख्यातस्य विकृतिसमानवचनत्वे उपष्टम्भकः। तथा हि भाष्ये खदिराङ्गारसदृशे इति विशेषणेन तत्र कुण्डलयोः प्रकृतित्वं गम्यते, सिद्धायाः विकृतेः पाकानपेक्षणात्। पुनरपरया कृत्या युक्त इति विशेषणेन तु सुवर्णपिण्डस्य विकृतित्वम् आकृत्यन्तरयोगस्य प्रकृतित्वाप्रयोजकत्वात्। युज्यते चैतत् 'मृत्तिकेत्येव सत्यमि'तिवत् संहृतिमुखेन पुनरावृत्त इत्यनेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यते। तथा हि पूर्वोपक्रान्ताया विकृतिपरम्परायास्तत्पर्यवसायित्वेन सिषाधयिषितसुवर्णनित्यत्वसिद्धेः। तस्मात् पूर्वनिर्दिष्टापराकृतिविशिष्टस्य तस्य विकृतित्वमेव भाष्यकृत्तात्पर्यविषय इत्यस्यापि वक्तुं शक्यतया नोक्तभाष्यमाख्यातस्य विकृतिसमानवचनत्वे साधकमिति—

तन्न। यथा हि सुवर्णस्य पिण्डप्रकृतित्वं पिण्डस्य तु सुवर्णविकृतित्वं यथा वा सुवर्णपिण्डस्य स्वस्तिकप्रकृतित्वं स्वस्तिकानान्तु सुवर्णपिण्डविकारत्वं भाष्याल्लभ्यते तथैव सुवर्णपिण्डे कुण्डलद्वयप्रकृतित्वलाभात् तथा हि "सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते, स्वस्तिकाकृतिमुपमृद्य कटकाः क्रियन्ते, पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या युक्तः खदिराङ्गारसदृशे कुण्डले भवतः" इति भाष्यं सांख्यमतानुसारेण प्रवृत्तम्। तन्मते च कार्यकारणयोरभेदोपगमात् एकस्मिन् सुवर्णे आकृतिर्नाना सुवर्णन्तु तदेवेति दृष्टान्तमुखेन द्रव्यस्य नित्यत्वसाधकम्। तस्यायमर्थः विश्लिष्टाऽनेकसुवर्णखण्डमग्नितापात् कयाचिदाकृत्या पिण्डव्यवहारप्रयोजकाकृत्या युक्तं सत् पिण्डो भवति पिण्डव्यवहारविषयो भवति। ततः पुनरग्नितापादितः पिण्डाकृतिमुपमृद्य पिण्डाकृतिं तिरोभाव्य स्वस्तिकाः क्रियन्ते। पुनः स्वस्तिकाकृतिमुपमृद्य कटकाः क्रियन्ते। पुनश्च ते दहनतापादेव आवृत्तः पुनरद्भूतः सुवर्णपिण्डः अपरया पिण्डव्यवहारप्रयोजकाकृतिभिन्नया कुण्डलद्वयव्यवहारसंपादिकयाकृत्या युक्तः सन् कुण्डले भवतः इति।

एवं चैतद्भाष्यं कुण्डलयोरेवं विकृतित्वतात्पर्यकं न सुवर्णपिण्डस्य। नानाखण्डसुवर्णात् सुवर्णपिण्डे', सुवर्णपिण्डात् स्वस्तिका', स्वस्तिकेभ्यः कटकाः, पुनरमी द्रुतेभ्यः कटकेभ्यः सुवर्णपिण्ड', पुनस्तस्मात् कुण्डले इत्येवं विकृतिपरम्परायां सुवर्णमेव सर्वमिति द्रव्यस्य नित्यत्वसिद्धेः। यद्वा पुनरावृत्तः सुवर्णपिण्ड इत्यनेनोपसंहृत्य सृष्टिप्रवाहं दिदर्शयिषया पुनः कुण्डलसृष्टिरभिहिता। त्वदुक्तोत्प्रेक्षिताशयकत्वे कुण्डलसृष्टेरनुक्तयोपक्रमोपसंहारयोरसंगतिः। खदिराङ्गारसदृशे इति विशेषणं न कुण्डलयोः प्रकृतित्वसाधकं, न हि तत् तदानीन्तनपाकविशिष्टपरत्वे एव संगतं, सिद्धयोरपि

कुण्डलयोर्भास्वररक्तवर्णतया खदिराङ्गारसादृश्यात्। अत उपरञ्जकमेव तद्विशेषणम्। तथा आकृत्यन्तरयोगस्य प्रकृतित्वाप्रयोजकत्वादित्यपि तदुक्तिरयुक्तैव, सुवर्णपिण्डस्य कुण्डलाकृतिसम्बन्धाभावे कार्यकारणयोरैक्यानुपपत्तेः। न च तथा सति सुवर्णपिण्डे कुण्डलव्यवहारापत्तिः, कुण्डलाकृतेः सूक्ष्मरूपेणावस्थानात्। यदा तु तस्य प्राकट्यं तदा कुण्डलव्यवहारो भवत्येव। न चैवमाकृतेरपि नित्यत्वमेवेति "आकृतिरन्या चान्या चे"ति भाष्यविरोध इति वाच्यम्, व्यावहारिकदृष्ट्या तदुपादानात्, सिद्धान्ते त्वाकृतिरपि नित्यैव इतरथा सदेव कार्यमिति सिद्धान्तभङ्गापत्तेः। एवञ्चोक्तभाष्यप्रयोगविरोधात् प्रकृतिकर्मणि लादय इति निर्णयं कर्तुमशक्य इति चेत्—

अत्रोच्यते। भस्मीक्रियते भस्मीभवन्तीत्यादिविकृतिवाचकप्रकृतिकच्विप्रत्ययस्थले च्विप्रत्ययप्रकृत्यर्थस्य च्व्यर्थारोपेऽन्वयित्वेन तस्य कर्मत्वादिना क्रियान्वयासंभवात् तद्भिन्नस्य प्रकृतिरूपार्थस्यैव कर्मत्वं कर्तृत्वं वा युज्यते। एवञ्च तत्रैव कर्मणि कर्तरि वा लादयः, तद्गतैव च संख्या तिङा बोध्या। अन्यत्र तु कामचारः प्रकृतिगताया विकृतिगताया वा संख्यायास्तिङा बोधयितुं शक्यत्वात्।

"गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम्।
बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया" ॥

इति दुह्यादिविषये प्रामाणिकनियामकवत् प्रकृतिविकृत्युभयकर्मकधातुविषये नियामकाभावात्।

'गृह्णाति याचकः संख्या प्रकृतेर्विकृतेर्न हि' इति केनचिदुक्तं तु सुवर्णं कुण्डले भवत इति भाष्यप्रयोगप्रतिकूलत्वान्न प्रामाणिकम्।

इदन्तु बोध्यम्। गौणे कर्मणि दुह्यादेरित्यादिवचनबलाद्यत्र कर्मणि प्रत्ययो जायते तस्मादन्यत् कर्म अनुक्तमेव भवति। अतस्तत्र कर्मत्वप्रयुक्ता द्वितीया भवति, यथा समुद्रो रत्नानि दुदुहे, बलिर्वसुधां याचितः। प्रकृतिविकृत्युभयकर्मकधातोस्तु यस्मिन् कर्मणि प्रत्ययः क्रियते ततोऽन्यदपि कर्म उक्तवद्भवति। तेन काशाः कटाः क्रियन्ते इत्यादय एव प्रयोगाः न तु काशाः कटं क्रियन्ते इत्यादयः। अत्र च तथा प्रामाणिकप्रयोगदर्शनमेव मानम् ॥८०–८१॥

भ्रान्तिरक्तौ तथारोपे तद्भिन्नस्यार्थगामिनी।
आपः प्रत्याय्यते संख्या तिङेत्येतद्विभाव्यताम् ॥८२॥

तदभाववति तत्प्रकारकज्ञानं भ्रमः। स च त्रिविधः तदभावज्ञानरूपबाधाऽपूर्वकः, तत्पूर्वकः, विरुद्धानेककोटिकश्च। क्रमेण यथा रङ्गे इदं रजतम्। मुखं चन्द्रः। अयं स्थाणुर्वा पुरुषो वा इति। तत्राद्यो भ्रमशब्देन व्यवह्रियते, यद्वान् भ्रान्तोऽसीत्युच्यते। द्वितीयस्तु आरोप इति आहार्यारोप इति वा व्यपदिश्यते। तृतीयस्तु संशयः। आरोपस्य वस्तुतो भ्रमत्वेऽपि तद्वान् पुरुषो भ्रान्त इति नोच्यते लोके। तत्र लोकव्यवह्रियमाणभ्रमप्रतिपादकवाक्ये तिङा प्रायेण भ्रमविशेष्यगता संख्या बोध्यते, यथा नेत्ररोगवशादनेन चन्द्रो द्वौ दृश्यते।

एवमारोपवाक्येऽपि प्रायेणारोपविशेष्यगता संख्या तिङा प्रत्याय्यते, यथा एकोऽपि घटोऽतिवृहत्वात् द्वौ घटौ मन्यताम्।

क्वचित्पुनरारोप्यमाणगतापि संख्या तिङा प्रतिपाद्यते, यथा—

"विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः।
अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थितम्।"

इत्यत्र श्रीहर्षपद्ये आरोप्यायशोयुगगतैकत्वसंख्याबोधकत्वमाख्यातस्य। अत एवोक्तं कारिकायां 'प्राय' इति।

#### तत्र मतान्तरखण्डनम्

यत्तु एकत्वावच्छिन्ने द्वित्वावच्छिन्नारोपस्थले एको द्वौ ज्ञायते इत्यादावारोपविशेष्यवाचकसमानवचनत्वमाख्यातस्य। न चैवम् "अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराः शिरःस्थित"मित्यत्रारोप्यमाणाशोयुगसमानवचनममानीतिश्रीहर्षप्रयोगस्यासंगतिरिति वान्यम्, अत्रापि पूर्वार्धसमर्थितायशोयुगस्य वास्तवत्वेन तस्मिन् द्विफालबद्धचिकुराणामेव राज्ञ आरोप्यत्वेन कवेरुत्प्रेक्षितत्वादिति।

तन्न, यतः इदमयशो मम शिरसि पतितमिति लोकव्यवहारसिद्धमयशसः शिरःस्थितत्वं लोकप्रसिद्धम्। प्रसिद्ध्यनुसारिणी च कवीनां वाणी। तथा च नैते चिकुराः अपि तु शिरःस्थितमयशोयुगमित्यपह्नुत्या सुबोधोऽर्थः कविनोत्प्रेक्षया निबद्ध इति सिद्धचिकुरविषयाकीर्त्युत्प्रेक्षेयम्। तस्मादत्र सिद्धानामारोपायोगात् सिद्धचिकुरेष्वसिद्धत्वमाक्षिप्य असिद्धेऽयशोयुगे सिद्धत्वं चाभ्युपेत्य तत्र द्विफालबद्धचिकुरोत्प्रेक्षोपपादनकुसृष्टिर्नोचितेति विभावयन्तु सुधियः॥८२॥

### लिङ्गनिमित्तककार्याणां संग्रहो विचारश्च

पुंस्त्वनिमित्तकविधयः "तस्माच्छसो नः पुंसी"ति नत्वम्। "इदोऽय् पुंसी"त्ययादेशः। "पुमान् स्त्रिये"त्येकशेषः। "तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्ये"ति पुंवद्भावः। "पुंसि संज्ञायां घः प्रायेणे"त्यादिभिः कृत्प्रत्ययाः। एवमन्येऽपि।

स्त्रीत्वप्रयुक्ता विधयस्तु "स्त्रियामि"त्यधिकृत्य प्रत्ययाः। ते च टाप् डाप् चाप् ङीप् ङीष् ङीन् ष्फ प्रभृतयः। "पुमान् स्त्रिये"त्येकशेषः। "ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री"त्यनेनाप्येकशेषः। "आङो नाऽस्त्रिया"मिति नादेशाभावः। "स्त्रियामवन्तिकुन्तिकुरुभ्यश्चे"ति लुक्। एवमन्येऽपि।

नपुंसकत्वनिमित्तककार्याणि च "स्वमोर्नपुंसका"दिति लुक्। "अतोऽमि"त्यमादेशः। "नपुंसकस्य झलचः" इति "इकोऽचि विभक्ता"विति च नुम्। "नपुंसकाच्चे"ति शीभावः। "जश्शसोः शि"रिति श्यादेशः। "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या"मित्येकशेषः। एवमन्यान्यपि।

अत्रेदं बोध्यम्। "अतोऽमि"ति सूत्रस्य नपुंसकत्वशक्तात् परयोः स्वमोरमिति नार्थः। तथा सति पङ्को मा कारि इत्यत्रामादेशापत्तेः, "अत्री पङ्कं पुमान् पाप्मे"ति कोशात्। तत्र नपुंसकत्वनिरूपिताया अपि शक्तेः सद्भावात् 'निषिद्धलिङ्गं शेषार्थ'मिति परिभाषितत्वात्। नापि नपुंसकत्वबोधकादित्यर्थः, श्रोतुर्लिङ्गविषयकबोधाभावे कुलमित्यादावमादेशाभावापत्तेः।

न वा नपुंसकत्वपरादित्यर्थः, नपुंसकतेत्यत्रामादेशप्रसङ्गात्। अपि तु नपुंसकत्वावच्छिन्नविषयताकबोधपरात्स्वमोरमित्यर्थो वाच्यः। तथा च नपुंसकताशब्दस्य नपुंसकत्वविषयकबोधपरत्वेऽपि न नपुंसकत्वावच्छिन्नविषयताकबोधपरत्वमपि तु स्त्रीत्वावच्छिन्नविषयताकबोधपरत्वमिति न तत्रातिप्रसङ्गः।

एवमेव पङ्क्तानि न क्रियन्तामित्यत्र तस्माच्छसो नः पुंसीति नत्वाभावः। शसः प्रकृतेः पुंस्त्वावच्छिन्नविषयताकबोधजनकत्वप्रकारकवक्तृतात्पर्यविशेष्यत्वे नत्वमिति तदर्थात्।

एतेन व्युत्पत्तिवादगूढार्थतत्त्वालोके यदुक्तम् समानलिङ्गकत्वं च स्वघटितपुंलिङ्गत्वाद्यन्यतमवत्त्वम्। पुंलिङ्गत्वादिकं च असाधारणपुंस्त्वादिव्यवहारप्रयोजकसत्त्वादिगुणोपचयापचयस्य पुंस्त्वादिरूपत्वनये पुंस्त्वादिबोधकत्वमेव। स्वमते गुणानङ्गीकारात्, सत्यां मातर्यां भ्राता नास्ति, भ्रातरि च सति भ्राता नास्तीति प्रतीत्योरुत्पादात् लिङ्गयोन्यादिमत्त्वलक्षणपुंस्त्वस्त्रीत्वादिप्रत्ययस्याङ्गीकरणीयत्वेऽपि तट-

स्तटीत्यादौ तत्प्रत्ययस्य बाधात् प्रयोजनाभावाच्चानङ्गीकरणीयत्वमेवेति न पुंस्त्वादि-बोधकत्वं पुंलिङ्गत्वादिकम्, अपि तु प्राण्यप्राणिप्रतिपादकसाधारणं पदसंस्कारप्रयोजकं पुंलिङ्गत्वादिना परिभाषितत्वमेव। पुंस्त्वादिबोधस्वरूपयोग्यत्वमेव पुंलिङ्गत्वादिकम्। तत्त्वं चानुगतं प्रातिपदिकवृत्त्यानुपूर्वीकत्वमित्यादि इत्यपि कश्चिदिति।

तच्चिन्त्यम्। पुंलिङ्गत्वादेः पुंलिङ्गत्वादिना परिभाषितत्वरूपत्वे पुंलिङ्गत्वादिबोधस्व-रूपयोग्यत्वरूपत्वे वा। तस्य पुंस्त्वादिबोधकत्वरूपत्वानङ्गीकारात् पदसंस्कारप्रयोज-कत्वानुपपत्तेः। तथा हि अप्राणिबोधकतटादिशब्देभ्यो लिङ्गविषयकबोधानभ्युपगमे पङ्क इत्यादौ उक्तरीत्या अमाद्यापत्तिर्दुष्परिहरा, अर्थनिमित्तककार्यमात्रस्य तत्तदर्थविवक्षाया-मेव प्रवृत्तेः अन्यथातिप्रसङ्गात्।

अपि च शास्त्रीयलिङ्गस्य शाब्दबोधाभावे उपमालङ्कारे उपमानोपमेययोरुक्त्योर्वि भिन्नलिङ्गकत्वं दोष इत्यालङ्कारिकसिद्धान्तो निर्बीजः स्यात्। तद्बोधोपगमे तु लिङ्गभेद-प्रयुक्तवैधर्म्यावभास एव तस्य दोषत्वे बीजं भवति।

अपि च अचेतनबोधकपदात्प्रतीयमानमपि लिङ्गं लोके प्रवृत्तिनिवृत्त्योरनुपयोगेनो-पेक्षया ग्रहणात् शाब्दबोधे अविषयीभवदिव लक्ष्यते। यथा योगशास्त्रे भगवता पतञ्जलि-मुनिना समाधेः शब्दसङ्कीर्णत्वे सवितर्कत्वोक्तथा

"न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" ॥

इति हर्युक्त्या च सूक्ष्मानुभवारूढतया च शाब्दबोधे भासमाना अपि शब्दाः प्रवृत्तौ निवृत्तौ वानुपकारेणाविषयीभवन्त इव प्रतिभान्ति तथा लिङ्गान्यपीति विभावयन्तु सुधियः।

अथ पुंवद्गालवस्येत्यादिशास्त्रविहितपुंवद्भावात् पुंस्त्वनिमित्तककार्येण भवितव्यम्। न च 'अनादये ब्रह्मणे नमः' इत्यादौ अनादि ए इत्यवस्थाया पुंस्त्वनिमित्तकं किमपि कार्यं प्राप्नोति यस्यातिदेशः स्यात्। नापि नपुंसकत्वनिमित्तस्नुमादेः प्रतिबन्धो भवितुमर्हति। एवञ्च पुंवद्भावस्य किं तात्पर्यमिति चेत्—उच्यते। पुंवद्भावेन भावाभावयोरुभयोरप्यति-देशः क्रियते, अर्थात् पुंस्त्वबोधपरत्वे यत्कार्यं प्राप्नोति तद्भवेत्, यच्च न प्राप्नोति तन्नैव अनादिशब्दस्य यदा पुंस्त्वपरत्वं तदा नपुंसकत्वपरत्वायोगात् नपुंसके विधीयमानो नुम् न प्राप्नोति, अतो न भवति। गुणे तु लिङ्गस्य निमित्तत्वाभावात्पुंस्त्वादिपरत्वेऽपि प्राप्त्या भवत्येव सः। तेन अनादये ब्रह्मणे इत्यादेः पाणिनी सिद्धिः।

अथ स्त्रियाः पुंवदित्यादिना स्त्रीप्रत्ययान्तस्य स्त्रीबोधकस्य वा पुंवद्भावो विधीयते। चित्रा गावोऽस्य स चित्रगुः। रूपवती भार्या यस्य स रूपवद्भार्यः। रूपवती चासौ भार्या च रूपवद्भार्या, पुंवत्कर्मधारयेति पुंवद्भावः। एनामाचष्टे एतयति, 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चे'ति पुंवद्भावः इष्ठनि परे 'भस्याढे तद्धिते" इति पुंवद्भावविधानात्।

अत्रेयं विचारणा। पुंवद्भावात् कथमुक्तरूपसिद्धिः? यतः पुंवदित्यस्य पुंस्त्वविवक्षायां यत्कार्यं प्राप्नोति तत्स्यादित्यर्थः। चित्रा गावः रूपवती भार्या इत्यवस्थायां च चित्राशब्दादेः पुंस्त्वनिमित्तकं न किमपि कार्यं प्राप्तम्। यदि च पुंवद्भावविधानसामर्थ्यात् स्त्रीप्रत्ययप्रकृतेः पुंस्त्वमित्यर्थः क्रियते तदापि स्त्रीप्रत्ययनिवृत्तिरशक्या 'जातः संस्कारो न निवर्तते' इति न्यायात्। अत्रोच्यते—'येन येन शास्त्रेण पुंवद्भावो विधीयते तत्र तत्र सर्वत्र विषयसप्तमी' तथा च 'स्त्रियाः पुंवदि'त्यस्य स्त्रीबोधकसमानाधिकरणपरत्वविषये स्त्रीबोधकस्य पुंवद्रूपमित्यर्थः। पुंस्त्वविवक्षायां यत्कार्यं तद्भवेत् यत्र पुंस्त्वविवक्षायां न प्राप्नोति तत्रेति यावत्। एवं च यदि चित्राशब्दात् स्त्रीप्रत्ययो न स्यात्तर्हि समानाधिकरणपरत्वं स्यादिति समानकाले एव चित्राशब्दे पुंवद्भावविधानात् टापोऽनुत्पत्त्या चित्र सु गो सु, रूपवत् सु भार्या सु इत्याद्यलौकिकविग्रहे एव बहुव्रीहिः। 'चित्रा अस् गो अस् इत्यलौकिकविग्रहे चित्रगुः" इति सिद्धान्तकौमुद्यां लेखस्तु बालानां यथाकथंचिदापाततो झटिति बोधाय न तु यथार्थप्रक्रियातत्त्वबोधायेति बोध्यम्। पुंवद्भावविधिषु विषयसप्तमीति भाष्यकारस्याप्यभिप्रायः।

नियतबहुवचनान्तशब्दसंग्रहः

(१) दारशब्दो विवाहितायां नित्यबहुवचनान्तः, 'अथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी' इत्यमरकोषात्। आनन्त्यत्वनियतवचनः—

"क्रोडा हारा च दाराश्च त्रय एते यथाक्रमम्।
क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः" ॥

इति हेमचन्द्रकोषात्। तथा च दारशब्दः पुंसि स्त्रियां च। तत्र स्त्रीत्वविवक्षायां स्त्रीप्रत्यये सति दारा इति अनियतवचनः। पुंस्त्वविवक्षायान्तु स्त्रीप्रत्ययाभावेऽदन्तो नियतबहुवचनान्तः। आनन्त्यश्चामरकोषानुक्तत्वात् प्रयोगादर्शनाच्च लोके प्रयोगानर्हः।

(२) गृहशब्दः पुंलिङ्गो वेश्मनि दारेषु च। 'गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः" इति मनुष्यवर्गे, "दारेषु च गृहाः" इति नानार्थे चामरसिंहेनोक्तत्वात् नपुंसकगृहशब्दस्तु वेश्मन्येव अनियतवचनश्च

( ३ ) लाजशब्दो भर्जनेन स्फुटितधान्यविकारे लावा इति मैथिलीभाषया व्यवहृते 'इमाल्लाँजानावपाम्यग्नौ', 'इय नार्युपब्रूते लाजानावपन्तिका' इत्यादि 'वेदेऽपि बहुवचनान्तस्यैव प्रयोगदर्शनात् 'लाजा पुभूम्नि' इत्यमरकोषाच्च ।

( ४ ) अक्षतशब्दो यवे । 'लाजा पुभूम्नि चाक्षता' इत्यमरग्रन्थस्य लाजा यवा इति व्याख्यानस्य अमरविवेके विश्वभरण कृतत्वात् । अय नपुसकलिङ्ग एकवचनान्तोऽपि "अक्षत न द्वय पण्डे लाजेषु त्रिप्वहिंसिते यवेऽपि क्वचि"दिति मेदिनीकोषात् ।

( ५ ) धानाशब्दो भृष्टयवे 'फडभी' इति मैथिलाभाषया प्रसिद्धे । 'धाना भृष्टयवे स्त्रिय' इत्यमरकोषे स्त्रिय इति बहुवचनोक्त, नित्यबहुत्वे इत्यमरविवेके व्याख्यानाच्च ।

( ६ ) सुमनस्शब्द प्रसूने, 'स्त्रिया सुमनस पुष्पम्' इत्यमरोक्ते । 'भूम्नि स्त्रिया सुमनस' इति रत्नकोषाच्च । 'सुमना पुष्पमालत्यो स्त्रिया'मिति मेदिनीकोषादेकवचनान्तोऽपि । अमरकोषे भूम्नीति कथनन्तु एकस्मिन्नपि बहुवचनस्य साधुत्वबोधनाय । देववाचकस्त्वनियतवचन "सुपर्वाण सुमनस" इत्यमरकोषे बहुवचनन्तु देवाना बहुत्वात् छन्दोनुरोधाद्वा ।

( ७ ) अप्सरस्शब्द स्वर्वेश्यायाम्, 'स्त्रिया बहुष्वप्सरस" इत्युक्तत्वात् । क्वचित् विवक्षकारास्तु एकस्यामपि व्यक्तौ बहुवचनान्त अप्सरा इत्यपि प्रयोगदर्शनात्प्रायशो बहुत्वमित्याहु । अन्ये तु 'अप्सरा' इति सविसर्गपाठ क्वचिदुपलभ्यमानोऽपि प्रामादिक अप्सरेतिशब्दस्य रत्नावलीकोषे कथनात् । एतच्च शब्दकल्पद्रुमे ।

( ८ ) असुशब्दो यावज्जीवनशरीरस्थायिवायुवाचक । "पुसि भूम्न्यसव" इत्यमरकोषात् ।

( ९ ) प्राणशब्दोऽसुपर्याय । 'पुसि भूम्न्यसव प्राणा' इत्यमरकोषात् । प्राणा अपि 'नित्य पुसि भूम्नि चे'ति टीकाकृतोक्तत्वात् तथैव प्रयोगाणामुपलम्भेश्च । हृन्मात्रस्थवायुवाचकस्तु न नित्यबहुत्वे, "हृदि प्राणो गुदेऽपान" इत्युक्ते ।

( १० ) वर्षाशब्द प्रावृषि "स्त्रिया प्रावृट्" स्त्रिया भूम्नि वर्षा, इत्यमर ।

( ११ ) जलौकस्शब्दो जलौकायाम् । "रक्तपा तु जलौका स्यात् स्त्रिया भूम्नि जलौकस" इत्यमर । अयमनियतवचनोऽपि बहुत्वकथनन्त्वेकस्यामपि व्यक्तौ बहुवचनसाधुत्वबोधनार्थम् ।

( १२ ) बल्वजशब्द तृणविशेषे, साबय इति मैथिलीभाषायां प्रसिद्धे । "पुसि भूम्नि तु बल्वजा" इत्यमर । 'एको बल्वज" इति भाष्यकारवचनादेकत्वेऽपीति महेश्वर ।

( १३ ) सप्तर्षिशब्द चित्रशिखण्डिषु । ते च ऋषय ।

"मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः" ॥

( १४ ) चित्रशिखण्डिशब्दः सप्तर्षिपर्यायः। "सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिन" इत्युक्तत्वात्।

( १५ ) इल्वलाशब्दः मृगशीर्षशिरोदेशस्थिततारासमूहे "इल्वलास्तच्छिरोदेशे तारका निवसन्ति या" इत्यमरः।

( १६ ) प्रोष्ठपदाशब्दः पूर्वाद्वयोत्तराद्वयरूपासु चनस्रु ।

( १७ ) भाद्रपदाशब्दश्च तारासु "स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः" इत्यमरः।

( १८ ) त्र्यादयोऽष्टादशान्ताः त्रित्वादिसंख्याविच्छिन्नवाचकाः।

( १९ ) विश्वशब्दो देवगणविशेषे नित्यबहुवचनान्तः पाणिनीये सर्वनामसंज्ञकः। विश्वेदेवाः धर्मान् विश्वानाम्नि दक्षकन्यायामुत्पन्ना इति वायुपुराणे। सप्तपुरुषेभ्य उपरितनाः पितर एव विश्वे देवा इत्यन्यत्र। अयं च विश्वशब्दः स्वसमानवचनविशेषणवाचकदेवशब्देन सहैव प्रयुज्यते, यथा 'विश्वे देवाः प्रीयन्ताम्', 'विश्वान्देवानहमावाहयिष्ये'। विश्वदेवशब्दस्तु नास्त्येव। विश्वेदेवास्तु दश।

"आदित्या द्वादश प्रोक्ता विश्वेदेवा दश स्मृताः ।
वसवश्चाष्ट संख्याताः षट्त्रिंशत् तुषिता मताः ॥
आभास्वराश्चतुःषष्टिर्वाताः पञ्चाशदूनकाः ।
महाराजिकनामानो द्वे शते विंशतिस्तथा ।
साध्या द्वादश विख्याता रुद्रा एकादश स्मृताः" ॥

इत्युक्तत्वात् तथा

वसुसत्यौ क्रतुर्दक्षौ कालकामौ धृतिः कुरुः
"पुरूरवा माद्रवाश्च विश्वेदेवाः प्रकीर्तिताः ।
इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः ॥ इति भरतः
नैमित्तिके कालकामौ काम्ये च धृतिलोचनौ ।
पुरूरवा माद्रवाश्च पार्वणे समुदाहृताः" ॥

एतच्च विष्णुपुराणे गणभेदनामाध्याये। अत्र लोचन इति पूर्वोक्तकुरोरेव संज्ञान्तरम्। पुरूरवोमाद्रवसौ सकारान्तौ। उक्तञ्च व्युत्पत्तिवादे पुरूरवोमाद्रवसौ विश्वे देवा इति। एतेन विश्वशब्दस्य नित्यबहुवचनान्तत्वं लभ्यते। एवञ्च आदित्यवातादिवत् विश्वशब्दोऽनियतवचन इति न वाच्यम्। एतच्च शब्दकल्पद्रुमे।

( २० ) दण्डकशब्दः अरण्यविशेषे। तथा च वाल्मीकीयेऽरण्यकाण्डे विराधं प्रति रामवाक्यम्—

"त्वां तु वेदितुमिच्छामि कस्त्वं चरसि दण्डकान्" इति।

तथा तत्रैव रामं प्रति शूर्पणखावाक्यम्—

"पश्यन् सह मया कामी दण्डकान् विचरिष्यसि"।

एवं खरं प्रति रामः—

"प्रवृद्धनिद्रे शयिते त्वयि राक्षसपांसुले।
भविष्यन्ति शरण्यानां शरण्या दण्डका इमे"॥

अङ्गादयः प्रभूतशब्दाः निवासार्थे विहितलुप्ततद्धितप्रत्यया देशविशेषबोधका नित्यबहुवचनान्ताः। तथा हि अङ्गनाम्नो राज्ञोऽपत्यमिति विग्रहेऽङ्गशब्दात् 'तस्यापत्यम्' इत्यणि आङ्गः, द्वित्वे आङ्गौ। बहुत्वे तु 'तद्राजस्य बहुषु' इत्यणो लुकि अङ्गाः। एवञ्च यथा राघवादिशब्दाना राघवः राघवौ राघव इत्येवं रूपाणि तथा आङ्गशब्दस्यापि। अङ्गानाम् (अङ्गराजापत्यानाम्) निवास इति विग्रहे 'तस्य निवासः' इति सूत्रेण पुनरण् प्रत्यये तस्यापि 'जनपदे लुप्' इति लुपि अङ्गा जनपद इति प्रयोगः। अणप्रकृत्यर्थस्य पुंस्त्वाद्बहुत्वाच्च 'लुपि युक्तवद्व्यक्तिवचने' इत्यनेन पुंस्त्ववद्भावात् बहुत्ववद्भावाच्च। एतावत्या प्रक्रियया अङ्गा इत्यस्य अङ्गराजापत्यनिवासजनपद इत्यर्थः सिद्ध्यति। एवं कलिंगादीनामपि तेन कलिङ्गेष्ववात्सी', नाहं कलिङ्गान् जगामेत्यादयः प्रयोगाः।

अङ्गप्रभृतिशब्दानां तत्तद्देशे रूढिमभ्युपगम्य लोके योगार्थभानाभावं चाकलय्य स्वयमेव पाणिनिना लुप. प्रत्याख्याने तु लुपियुक्तवदित्यस्यापि प्रत्याख्येयतया लोकत एव तत्तद्देशरूढाङ्गादिशब्दानां पुंस्त्वे बहुत्वे च साधुत्वमिति तदाशयः।

तथा च येषां शब्दानां लोके यल्लिङ्गता यद्वचनता च दृश्यते तेषां तथैव साधुत्वमिति लाभात् दारलाजादीनामपि पुंस्त्वबहुत्वादौ साधुता व्याकरणशास्त्रप्रवर्तकाचार्यसम्मतेति लभ्यते इति पूर्वमुक्तमनुसन्धेयम्।

मिथिलाकाशीप्रयागायोध्यादयस्तु देशवाचित्वेऽपि न बहुवचनान्ताः अपि त्वेकवचनान्ता एव बहुत्वेऽप्रयुज्यमानत्वात्। नित्यबहुवचनान्ता अङ्गादयस्तु—

अङ्ग उत्कल कच्छ कम्बोज कर्णाट कलिङ्ग कुरु केकय केरल कोङ्कण कोशल गान्धार गुर्जर गोनर्द चोल तैलङ्ग दण्डक पञ्चाल पाण्ड्य पुण्ड्र बाह्लीक मगध मन्द्र मत्स्य मरु महाराष्ट्र मालव वङ्ग विदर्भ विदेह शक शाल्व सारस्वत सिंहल सौवीर सौराष्ट्रादयः पुराणादिषु द्रष्टव्याः।

इति मायदरवंशोद्भवेन पं॰ रूपनारायणात्मजेन मैथिलेन श्रीदीनबन्धुशर्मणा कृतो
लिङ्गवचनविचारः समाप्तः

# कारिकासूची

# Publication Scheme of the Mithila Research Institute

## DARBHANGA

1. Tattvachintamani (तत्त्वचिन्तामणि) by Gangesha Upadhyaya along with the Aloka (आलोक) by Paksadhara Mishra and the Darpana (दर्पण) by Mahesha Thakkura, Vol I ( in the Press )
2. Lilavati (लीलावती) by Bhaskaracharya with the commenatary called the Vasana (वासना) by Damodara Mishra ( in the Press )
3. Vimandalavakravichara (विमण्डलवक्रविचार) by Pandita Dayanatha Jha Jyotisacharya—Vishistavidvan Mithila Research Institute
4. Lingavachanavichara ( लिङ्गवचनविचार ) by Mahavaiyakarana Pandita Dinabandhu Jha Vishistavidvan, Mithila Research Institute

**Works under Preparation**

5. Tritalavacchedakavada (त्रितलावच्छेदकवाद) by Pandita Shashinatha Jha Vishistavidvan, Mithila Research Institute
6. Sanskrita Mahakosa ( संस्कृतमहाकोष ) by the late Mahamahopadhyaya Pandita Ramavatara Sharma
7. Paramartha-Darshana (परमार्थदर्शन) by Mm Pt Ramavatara Sharma.
8. Mahakalasamhita (महाकालसंहिता) Edited by Mahamahopadhyaya Dr. Gopinatha Kaviraja of Benaras and Mahamahopadhyaya Dr Umesha Mishra
9. Visnu-Purana ( विष्णुपुराण ) ( Under a long term Research project of the Institute )
10. Miscellaneous works in Sanskrit by Mm. Pt Ramavatara Sharma.
11. Kumarila Karikavali (कुमारिलकारिकावली) Edited by Prof. Anantalal Thakur.